'परव्यसनिनी नारी व्यग्रापि गृहकर्मणि ।
तदेवास्वादयत्यन्तः परसंगरसायनम् ।। (२७. ५८.)
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः ।
तदेवास्वादयत्यन्तर्बहिर्व्यवहरन्नपि ।।'
(२७. ५९.) इति ।

तत्र स्थितप्रज्ञः कालभेदाद् द्विविधः, समाहितो व्युत्थितश्च । तयोरुभयोर्लक्षणं पूर्वोत्तराभ्यामर्धाभ्यां पृच्छति—समाधिस्थस्य स्थितप्रज्ञस्य का भाषा? कीदृशैर्लक्षणवाचकैः शब्दैः सर्वैरयं भाष्यते? व्युत्थितः स्थितप्रज्ञः कीदृशं वाग्व्यवहारं करोति? तस्योपवेशनगमने मन्देभ्यो विलक्षणे कीदृशे?

श्रीभगवानुवाच—

'प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ।। ५५ ।।'

कामास्त्रिविधाः, बाह्या आन्तरा वासनामात्ररूपाश्चेति। उपार्जितमोदकादयो बाह्याः, आशामोदकादय आन्तराः, पथिपतिततृणादिवदापाततः प्रतीता वासनारूपाश्च। समाहितोऽशेषधीवृत्तिसंक्षयात् सर्वान् परित्यजति । अस्ति चास्य मुखप्रसादलिंगगम्यः संतोषः । स च न कामेषु किं त्वात्मन्येव, कामानां त्यक्तत्वात्, बुद्धेः परमानन्दरूपेणात्मतत्त्वाभिमुखत्वाच्च । न चात्र संप्रज्ञातसमाधाविवात्मानन्दो मनोवृत्त्योल्लिख्यते, किं तु स्वप्रकाशचिद्रूपेणात्मना । संतोषश्च न वृत्तिरूपः, किं तु तत्संस्काररूपः । एवंविधैर्लक्षणवाचकैः शब्दैः समाहितो भाष्यते ।

‘ दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ।। ५६ ।। ’

दुःखं रागादिनिमित्तजन्या रजोगुणविकाररूपा संतापात्मिका प्रतिकूला चित्तवृत्तिः । तादृशे दुःखे प्राप्ते सति ‘ अहं पापः, धिङ मां दुरात्मानम् ’ इत्यनुतापात्मिका तमोगुणविकारत्वेन भ्रान्तिरूपा चित्तवृत्तिरुद्वेगः । यद्यप्ययं विवेक इवाभाति तथाऽपि पूर्वस्मिञ्जन्मनि चेत्तत्पापप्रवृत्तिप्रतिबन्धकत्वात् सप्रयोजनो भवति, इदानीं तु निष्प्रयोजन इति भ्रान्तित्वं द्रष्टव्यम् । सुखं राज्यपुत्रलाभादिनिमित्तजन्या सात्त्विकी प्रीतिरूपानुकूला चित्तवृत्तिः । तस्मिन् सुखे सत्यागामिनस्तादृशस्य सुखस्य कारणं पुण्यमननुष्ठाय वृथैव तदपेक्षा तामसी चित्तवृत्तिः स्पृहा । तत्र च सुखदुःखयोः प्रारब्धकर्मप्रापितत्वाद्व्युत्थितचित्तस्य वृत्तिसंभवाच्च तदुभयमुपपद्यते । उद्वेगस्पृहे तु न विवेकिनः संभवतः । तथा रागभयक्रोधाश्च तामसत्वेन कर्मणा प्रापितत्वाभावान्नास्य विद्यन्ते । एवंलक्षणलक्षितः स्थितधीः स्वानुभवप्रकटनेन शिष्यशिक्षार्थमनुद्वेगनिःस्पृहत्वादिगमकं वचो भाषत इत्यर्थः ।

‘ यःसर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ।। ५७ ।। ’

यस्मिन्सत्यन्यदीये हानिवृद्धी स्वस्मिन्नारोप्येते तादृशोऽन्यविषयस्तामसवृत्तिविशेषः स्नेहः । सुखहेतुः स्वकलत्रादिः शुभो विषयः । तद्गुणकथनादिप्रवर्तिका धीवृत्तिरभिनन्दः । अत्र गुणकथनस्य परप्ररोचनार्थत्वाभावेन व्यर्थत्वात्तद्धेतुरभिनन्दस्तामसः । असूयोत्पादनेन दुःखहेतुः परकीयविद्यादिरेनं प्रत्यशुभो विषयः ।

तन्निन्दाप्रवर्तिका धीवृत्तिर्द्वेषः । सोऽपि तामसः, तन्निन्दाया निवारणार्थत्वाभावेन व्यर्थत्वात् । त एते तामसा धर्माः कथं विवेकिनि संभवेयुः ?

'यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठता ।। ५८ ।।'

व्युत्थितस्य समस्ततामसवृत्त्यभावः पूर्वश्लोकाभ्यामभिहितः । समाहितस्य तु वृत्तय एव न सन्ति, कुतस्तामसत्वशङ्केत्यभिप्रायः ।

'विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ।। ५९ ।।'

प्रारब्धं कर्म सुखदुःखहेतून्कांश्चिद्विषयांश्चन्द्रोदयान्धकारादिरूपान् स्वयमेव संपादयति, अन्यांस्तु गृहक्षेत्रादीन् पुरुषोद्योगद्वारेण । तत्र चन्द्रोदयादयः पूर्णेनेन्द्रियादिसंहारलक्षणेन समाधिनैव निवर्तन्ते, नान्यथा । गृहादयस्तु समाधिमन्तरेणापि निवर्तन्ते । आहरणमाहार उद्योगः । निरुद्योगस्य गृहादिविषया निवर्तन्ते; रसस्तु न निवर्तते । रसो मानसी तृष्णा । सापि परमानन्दरूपस्य परस्य ब्रह्मणो दर्शने सति स्वल्पानन्दहेतुभ्यो निवर्तते, 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' (बृ. उ. ४. ४. २२) इति श्रुतेः ।

'यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ।। ६० ।।
तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ।। ६१ ।।'

उद्योगत्यागब्रह्मदर्शनप्रयत्नं कुर्वतोऽपि कादाचित्कप्रमादपरिहाराय समाध्यभ्यासः । तदेतत्किमासीतेतिप्रश्नोत्तरम् ।

'ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ।। ६२ ।।

क्रोधाद् भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ।।६३।।'

असति समाध्यभ्यासे प्रमादप्रकार उपन्यस्तः। सङ्गो ध्येयविषयसंनिधिः । संमोहो विवेकपराङ्मुखत्वम् । स्मृतिविभ्रमस्तत्त्वानुसंधानाभावः । बुद्धिनाशो विपरीतभावनोपचयदोषेण प्रतिबद्धस्य ज्ञानस्य मोक्षप्रदत्वसामर्थ्याभावः ।

'रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ।। ६४ ।।'

विधेयात्मत्वं वशीकृतमनस्त्वम् । प्रसादो नैर्मल्यं बन्धराहित्यम् । समाध्यभ्यासयुक्तस्तद्वासनाबलाद् व्युत्थानदशायामिन्द्रियैर्व्यवहरन्नपि प्रसादं सम्यक्प्राप्नोति । तदेतत्किं व्रजेतेतिप्रश्नोत्तरम् । उपरितनेनापि बहुना ग्रन्थेन स्थितप्रज्ञः प्रपञ्चितः । ननु प्रज्ञायाः स्थित्युत्पत्तिभ्यां प्रागपि साधनत्वेन रागद्वेषादिराहित्यमपेक्षितम् । बाढम्; तथाप्यस्ति विशेषः, स च श्रेयोमार्गकारैर्दर्शितः—

'विद्यास्थितये प्राग्ये साधनभूताः प्रयत्ननिष्पाद्याः ।
लक्षणभूतास्तु पुनः स्वभावतस्ते स्थिताः स्थितप्रज्ञे ।।

जीवन्मुक्तिरितीमां
वदन्त्यवस्थां स्थितात्मसंबोधाम् ।
बाधितभेदप्रतिभा-
मबाधितात्मावबोधसामर्थ्यात् ॥' इति ॥

भगवद्भक्तो द्वादशाध्याये भगवता वर्णितः–

'अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥'

ईश्वरार्पितमनस्त्वेन समाहितस्यान्यानुसंधानाभावात्, व्युत्थितस्याप्युदासीनानुसंधानेन हर्षविषादाभावाच्च सुखदुःखसाम्यम् । एवं वक्ष्यमाणेष्वपि द्वन्द्वेषु द्रष्टव्यम् ।

'यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥ १९ ॥'
इति ॥

अत्रापि पूर्ववद्विशेषो वार्त्तिककारैर्दर्शितः—

'उत्पन्नात्मप्रबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधनरूपिणः ।।'
(नै. ४. ६९) इति ।।

गुणातीतश्चतुर्दशाध्याये वर्णितः—

अर्जुन उवाच—

'कैर्लिङ्गैस्त्रीन्गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ।। २१ ।।'

त्रयो गुणाः सत्त्वरजस्तमांसि; तेषां परिणामविशेषात्सर्वः संसारः प्रवर्तते; अतो गुणातीतत्वमसंसारित्वम्; जीवन्मुक्तत्वमिति यावत् । लिङ्गानि परेषामेतदीयगुणातीतत्वबोधकानि । आचार आचरणम्, तदीयमनःसंचारप्रकारः । कथमिति साधनप्रकार-प्रश्नः ।

श्रीभगवानुवाच—

'प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ।। २२ ।।
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ।। २३ ।।
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ।। २४ ।।
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ।। २५ ।।

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ।। २६ ।।'

प्रकाशप्रवृत्तिमोहाः सत्त्वरजस्तमोगुणाः । ते च जाग्रत्स्वप्नयोः प्रवर्तन्ते; सुषुप्तिसमाधिशून्यचित्तवृत्तित्वावस्थासु निवर्तन्ते । प्रवृत्तिश्च द्विविधा, अनुकूला प्रतीकूला चेति । तत्र मूढो जागरणे प्रतिकूलप्रवृत्तिं द्वेष्टि, अनुकूलप्रवृत्तिमाकाङ्क्षति । गुणातीतस्य त्वनुकूलप्रतिकूलाध्यासाभावाद् द्वेषाकाङ्क्षे न स्तः । यथा द्वयोः कलहं कुर्वतोरवलोकयिता कश्चित् तटस्थः स्वयं केवलमुदास्ते, न तु जयपराजयाभ्यामितस्ततश्चाल्यते, तथा गुणातीतो विवेकी स्वयमुदास्ते । 'गुणा गुणेषु वर्तन्ते, न त्वहम्' इति विवेकादौदासीन्यम् । 'अहमेव करोमि' इत्यध्यासो विचलनम्; न चास्य तदस्ति । तदिदं किमाचार इत्यस्य प्रश्नस्योत्तरम् । समदुःखसुखादीनि लिङ्गानि, अव्यभिचारिभक्तिसहितज्ञानध्यानाभ्यासेन परमात्मसेवा चेति गुणात्ययसाधनप्रश्नस्योत्तरम् ।।

ब्राह्मणो व्यासादिभिर्वर्णितः--

'अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ।
बाहूपधायिनं शान्तं तं देवा ब्राह्मणं विदुः ।।'
(म. भा. आनु. २५१)

ब्राह्मणशब्दो ब्रह्मविद्वाचीति 'अथ ब्राह्मणः' इति श्रुत्या वर्णितम्, ब्रह्मविदश्च विद्वत्संन्यासाधिकारात् । 'यथाजातरूपधरो नाच्छादनं चरति परमहंसः' इत्यादिश्रुत्या परिग्रहराहित्यस्य मुख्यत्वाभिधानादनुत्तरीयत्वादिकं तस्य युक्तम् ।

'येन केनचिदाच्छन्नो येन केनचिदाशितः ।
यत्रक्वचनशायी स्यात्तं देवा ब्राह्मणं विदुः ।।'
(म. भा. आनु. २५१)

देहनिर्वाहायाशनाच्छादनशयनस्थानापेक्षायामप्यशनादिगतौ गुण-दोषौ नान्विष्येते, उदरपूरणपुष्ट्यादिरूपस्य निर्वाहस्य समत्वान्निष्प्रयोजनस्य गुणदोषविचारस्य चित्तदोषत्वात् । अत एव भागवते पठ्यते–

'किं वर्णितेन बहुना लक्षणं गुणदोषयोः ।
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ।।' इति ।
'कन्थाकौपीनवासास्तु दण्डधृग्ध्यानतत्परः ।
एकाकी रमते नित्यं तं देवा ब्राह्मणं विदुः ।।'
(म. भा. आनु. २५१)

ब्रह्मोपदेशादिना प्राण्यनुजिघृक्षायामुत्तमत्वज्ञापनेन श्रद्धामुत्पादयितुं दण्डकौपीनादिलिङ्गं धारयेत्, 'कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकोपकारार्थाय च परिग्रहेत्' (परम. उ. १) इति श्रुतेः । अनुजिघृक्षयापि स्वयं तदीयां गृहकृत्यादिवार्त्तां न कुर्यात्, किं तु ध्यानपरो भवेत् । 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ (मु. उ. २. २. ५)' इति श्रुतेः,

'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद् बहूञ्शब्दान्वाचो विग्लापनं हि तत् ।।'
(बृ. उ. ४. ४. २१) इति श्रुतेश्च ।

ब्रह्मोपदेशस्त्वन्या वाङ् न भवतीति न ध्यानविरोधी । तच्च ध्यानमेकाकित्वे निर्विघ्नं भवति । अत एव स्मृत्यन्तरेऽभिहितम्—

'एको भिक्षुर्यथोक्तः स्याद् द्वावेव मिथुनं स्मृतम् ।
त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ।।
नगरं न हि कर्तव्यं ग्रामो वा मिथुनं तथा ।
राजादिवार्त्ता तेषां स्याद् भिक्षावार्त्ता परस्परम् ।।'
इति ।

'निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ।।
(म. भा. आनु. २५१)

विशिष्टैः संसारिभिः प्रणमतां पुरुषाणामाशीर्वादः प्रयुज्यते । यस्य यदपेक्षितं तं तं प्रति तदभिवृद्धिप्रार्थनमाशीः । तथा च पुरुषाणां भिन्नरुचित्वात् तदभिमतान्वेषणे व्यग्रचित्तस्य लोकवासना वर्धते । सा च ज्ञानविरोधिनी । तथा च स्मृत्यन्तरम्–

'लोकवासनया जन्तोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ।।'

एतच्चारम्भनमस्कारादिष्वपि द्रष्टव्यम् । आरम्भः स्वार्थं परोपकारार्थं वा गृहक्षेत्रादिसंपादनप्रयत्नः । तावेतावाशीर्वादारम्भौ मुक्तेन त्याज्यौ । न चाशीर्वादाभावे प्रणमतां नृणां खेदः शङ्कनीयः, लोकवासनाखेदयोरुभयोः परिहाराय निखिलाशीर्वादप्रतिनिधित्वेन नारायणशब्दप्रयोगात् । आरम्भस्तु सर्वोऽपि दुष्ट एव । तथा च स्मृतिः—

'सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ।'
(भ. गी. १८. ४८. ) इति ।

नमस्कारोऽपि विविदिषासंन्यासिनोऽभिहितः—

'यो भवेत् पूर्वसंन्यासी तुल्यो वै धर्मतो यदि ।
तस्मै प्रणामः कर्तव्यो नेतराय कदाचन ।।' इति ।

तत्र पूर्वत्वधर्मतुल्यत्वविचारे चित्तं विक्षिप्यते । अत एव नमस्कार-मात्र एव बहवः कलहायमाना उपलभ्यन्ते । तत्र निमित्तं वार्त्तिक-कारैर्दर्शितम्—

'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ।
संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः ।।'
(१. १५८४) इति ।

मुक्तस्य नमस्काराभावो भगवत्पादैर्दर्शितः–

'नामादिभ्यः परे भूम्नि स्वाराज्ये चेत् स्थितोऽद्वये ।
प्रणमेत् कं तदात्मज्ञो न कार्यं कर्मणा तदा ।।'
(उप. १७. ६४.) इति ।

चित्तकालुष्यहेतोर्नमस्कारस्य प्रतिषेधेऽपि सर्वसाम्यबुद्ध्या प्रसाद-हेतुर्नमस्कारोऽभ्युपेयते । तथा च स्मृतिः—

'ईश्वरो जीवकलया प्रविष्टो भगवानिति ।
प्रणमेद् दण्डवद् भूमावाश्वचण्डालगोखरम् ।।'
(भाग.) इति ।

स्तुतिर्मनुष्यविषया प्रतिषिध्यते, न त्वीश्वरविषया । तथा च बृहस्पतिस्मृतिः—

'आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद् विश्वकर्तारं को न मुच्येत बन्धनात् ।।'
इति ।

अक्षीणत्वमदीनत्वम् । अत एव स्मृतिः–

‘ अलब्ध्वा न विषादी स्यात् काले यद्यशनं क्वचित् ।
लब्ध्वा न हृष्येद्धृतिमानुभयं दैवतन्त्रितम् ।। ’ इति ।

क्षीणकर्मत्वं विधिनिषेधानधीनत्वम् ‘ निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ’ (शुका.) इति स्मरणात् । एतदेवाभिप्रेत्य भगवताप्युक्तम्––

‘ त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् । ’
(२. ४५) इति ।

नारदः––‘ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः ।। ’
(वि. पु. ) इति ।

‘ अहेरिव गणाद् भीतः संमानान्मरणादिव ।
कुणपादिव यः स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ।। ’
(म. भा. आनु. २५१)

‘ राजादिवार्त्ता तेषां स्यात् ’ इत्युक्तत्वात् सर्पवद्गणाद्भीतिरुपपद्यते, संमानस्यासक्तिकारणतया पुरुषार्थविरोधित्वान्मरणवद्धेयत्वम् । ‘ नरकादिव ’ इति वा पाठः । अत एव स्मृतिः––

‘ असंमानात् तपोवृद्धिः संमानात्तु तपःक्षयः ।
अर्चितः पूजितो विप्रोऽदुग्धा गौरिव सीदति ।। ’

एतदेवाभिप्रेत्यावमान उपादेयतया स्मर्यते––

'तथा चरेत वै योगी सतां धर्ममनुस्मरन् ।
जना यथावमन्येरन्गच्छेयुर्नैव संगतिम् ।।' इति ।

स्त्रीषु द्विविधो दोषः, प्रतिषिद्धत्वं जुगुप्सितत्वं चेति । तत्र प्रतिषिद्धत्वमात्रं कदाचिद्रागात् प्रारब्धबलादुल्लङ्घ्यते । तदेतदभिप्रेत्याह स्मृतिः—

'मात्रा स्वस्रा दुहित्रा वा नैकशय्यासनो भवेत् ।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ।।'

(मनु. २. २१५)

तथा च स्मृतिभिर्जुगुप्सा वर्णिता—

'स्त्रीणामवाच्यदेशस्य क्लिन्ननाडीव्रणस्य च ।
अभेदेऽपि मनोभेदाज्जनः प्रायेण वञ्चयते ।
चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम् ।
यद्रमन्ते नरास्तत्र साहसं किमतः परम् ।।'

'ये रमन्ते नरास्तत्र क्रिमितुल्याः कथं न ते' इति वा पाठः । अतः प्रतिषेधजुगुप्सयोरुभयोर्विवक्षया कुणपदृष्टान्तोऽत्राभिहितः ।

'येन पूर्णमिवाकाशं भवत्येकेन सर्वदा ।
शून्यं यस्य जनाकीर्णं तं देवा ब्राह्मणं विदुः ।।'

(म. भा. अनु. २५१)

संसारिणामेकाकित्वेनावस्थानं भयालस्यादिहेतुत्वाद्वर्ज्यम् । जनसमूहश्चातथाविधत्वादभ्युपेयः । योगिनस्तु तद्विपरीतत्वम् । एकाकित्वे सत्यविघ्नेन ध्यानानुवृत्तौ परिपूर्णेन परमानन्दात्मना सर्वमाकाशं पूर्णमिवावभासते । अतो भयालस्यशोकमोहादयो न भवन्ति,

'यस्मिन्सर्वाणि भूतानि आत्मैवाभूद् विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥'
(ईश. उ. ७.) इति श्रुतेः ।

जनाकीर्णं स्थानं राजवार्त्तादिना ध्यानविरोधित्वादानन्दात्मप्रतीतिरहितं तच्छून्यमिव चित्तं क्लेशयति, जगतो मिथ्यात्वादात्मनः पूर्णत्वाच्चेत्यर्थः ॥

अतिवर्णाश्रमी सूतसंहितायां मुक्तिखण्डे पञ्चमाध्याये विष्णुं प्रति परमेश्वरेण वर्णितः—

'ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
अतिवर्णाश्रमी तेऽपि क्रमाच्छ्रेष्ठा विचक्षणाः ॥ ९ ॥
अतिवर्णाश्रमी प्रोक्तो गुरुः सर्वाधिकारिणाम् ।
न कस्यापि भवेच्छिष्यो यथाहं पुरुषोत्तम ॥ १४ ॥
अतिवर्णाश्रमी साक्षाद् गुरूणां गुरुरुच्यते ।
तत्समो नाधिकश्चास्मिँल्लोकेऽस्त्येव न संशयः ॥ १५ ॥
यः शरीरेन्द्रियादिभ्यो विभिन्नं सर्वसाक्षिणम् ।
पारमार्थिकविज्ञानं सुखात्मानं स्वयंप्रभम् ॥ १६ ॥
परं तत्त्वं विजानाति सोऽतिवर्णाश्रमी भवेत् ।
यो वेदान्तमहावाक्यश्रवणेनैव केशव ॥ १७ ॥
आत्मानमीश्वरं वेद सोऽतिवर्णाश्रमी भवेत् ।
यो वर्णाश्रमनिर्मुक्तमवस्थात्रयसाक्षिणम् ॥ १८ ॥
महादेवं विजानाति सोऽतिवर्णाश्रमी भवेत् ।
वर्णाश्रमादयो देहे मायया परिकल्पिताः ॥ १९ ॥

नात्मनो बोधरूपस्य मम ते सन्ति सर्वदा ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।। २० ।।
आदित्यसंनिधौ लोकश्चेष्टते स्वयमेव तु ।
तथा मत्संनिधानेन समस्तं चेष्टते जगत् ।। २१ ।।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
सुवर्णे हारकेयूरकटकस्वस्तिकादयः ।। २२ ।।
कल्पिता मायया तद्वज्जगन्मय्येव सर्वदा ।
इति यो वेद वेदान्तैः सोऽतिर्णाश्रमी भवेत् ।। २३ ।।
शुक्तिकायां यथा तारं कल्पितं मायया तथा ।
महदादि जगन्मायामयं मय्येव कल्पितम् ।। २४ ।।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
चण्डालदेहे पश्वादिशरीरे ब्रह्मविग्रहे ।। २५ ।।
अन्येषु तारतम्येन स्थितेषु पुरुषोत्तम ।
व्योमवत्सर्वदा व्याप्तः सर्वसंबन्धवर्जितः ।। २६ ।।
एकरूपो महादेवः स्थितः सोऽहं परामृतः ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।। २७ ।।
विनष्टदिग्भ्रमस्यापि यथापूर्वं विभाति दिक् ।
तथा विज्ञानविध्वस्तं जगन्मे भाति तन्न हि ।। २८ ।।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।
यथा स्वप्नप्रपञ्चोऽयं मयि मायाविजृम्भितः ।। २९ ।।
तथा जाग्रत्प्रपञ्चोऽपि मयि मायाविजृम्भितः ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ।। ३० ।।
यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात् ।
स वर्णानाश्रमान् सर्वानतीत्य स्वात्मनि स्थितः ।। ३१ ।।

यस्त्यक्त्वा स्वाश्रमान् वर्णानात्मन्येव स्थितः पुमान् ।
सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदार्थवेदिभिः ।। ३२ ।।
न देहो नेन्द्रियं प्राणो न मनो बुद्ध्यहंकृती ।
न चित्तं नैव माया च न च व्योमादिकं जगत् ।। ३३ ।।
न कर्ता नैव भोक्ता च न च भोजयिता तथा ।
केवलं चित्सदानन्दो ब्रह्मैवात्मा यथार्थतः ।। ३४ ।।
जलस्य चलनादेव चञ्चलत्वं यथा रवेः ।
तथाहंकारसंसर्गादेव संसार आत्मनः ।। ३५ ।।
तस्मादन्यगता वर्णा आश्रमा अपि केशव ।
आत्मन्यारोपिता एव भ्रान्त्या ते नात्मवेदिनः ।। ३६ ।।
न विधिर्न निषेधश्च न वर्ज्यावर्ज्यकल्पना ।
आत्मविज्ञानिनामस्ति तथा नान्यज्जनार्दन ।। ३७ ।।
स्वात्मविज्ञानिनां निष्ठामीदृशीमम्बुजेक्षण ।
मायया मोहिता मर्त्या नैव जानन्ति सर्वदा ।। ३८ ।।
न मांसचक्षुषा निष्ठा ब्रह्मविज्ञानिनामियम् ।
द्रष्टुं शक्या स्वतःसिद्धा विदुषां सैव केशव ।। ३९ ।।
यत्र सुप्ता जना नित्यं प्रबुद्धस्तत्र संयमी ।
प्रबुद्धा यत्र ते विद्वान् सुषुप्तस्तत्र केशव ।। ४० ।।
एवमात्मानमद्वन्द्वं निराकारं निरञ्जनम् ।
नित्यशुद्धं निराभासं सच्चिन्मात्रं परामृतम् ।। ४१ ।।
यो विजानाति वेदान्तैः स्वानुभूत्या च निश्चितम् ।
सोऽतिवर्णाश्रमी प्रोक्तः स एव गुरुरुत्तमः ।। ४२ ।।'

इति ।

तदेवम् 'विमुक्तश्च विमुच्यते' इत्यादिश्रुतयो जीवन्मुक्तस्थितप्रज्ञभगवद्भक्तगुणातीतब्राह्मणातिवर्णाश्रमिप्रति - पादकस्मृतिवाक्यानि च जीवन्मुक्तिसद्भावे प्रमाणानीति स्थितम् । इति जीवन्मुक्तिप्रमाणानि ।। ५ ।।

**इति श्रीमद्विद्यारण्यप्रणीते जीवन्मुक्तिविवेके प्रथमं जीवन्मुक्ति-प्रमाणप्रकरणम् ।। १ ।।**

---

## द्वितीयं वासनाक्षयप्रकरणम् ।

अथ जीवन्मुक्तिसाधनं निरूपयामः । तत्त्वज्ञानमनोनाशवासनाक्षयास्तत्साधनम् । अत एव वासिष्ठरामायण उपशमप्रकरणस्यावसाने 'जीवन्मुक्तशरीराणाम्' (ल. वा. २८. १) इत्येतस्मिन् प्रस्तावे वसिष्ठ आह—

'वासनाक्षयविज्ञानमनोनाशा महामते ।
समकालं चिराभ्यस्ता भवन्ति फलदायिनः ।। ११६ ।।'
इति ।

अन्वयमुक्त्वा व्यतिरेकमाह—

'त्रय एते समं यावन्न स्वभ्यस्ता मुहुर्मुहुः ।
तावन्न पदसंप्राप्तिर्भवत्यपि समाशतैः ।।११५।।' इति ।

समकालाभ्यासाभावे बाधकमाह—

'एकैकशो निषेव्यन्ते यद्येते चिरयत्नतः ।
तन्न सिद्धिं प्रयच्छन्ति मन्त्राः संकलिता इव ।।११७।।'
इति ।

यथा संध्यावन्दनमार्जने सहविनियुक्तानाम् 'आपो हि ष्ठा' इत्यादीनां तिसृणामृचां मध्ये प्रतिदिनमेकैकस्या ऋचः पाठे शास्त्रीयानुष्ठानं न सिध्यति, यथा वा षडङ्गमन्त्राणामेकैकमन्त्रेण न सिद्धिः, यथा वा लोके शाकसूपौदनादीनामेकैकेन न भोजनसिद्धिः, तद्वत् । चिराभ्यासस्य प्रयोजनमाह—

'त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रन्थयो दृढाः ।
निःशङ्कमेव त्रुटयन्ति बिसच्छेदाद् गुणा इव
।। ११८ ।।' इति ।

तस्यैव व्यतिरेकमाह––

'जन्मान्तरशताभ्यस्ता राम संसारसंस्थितिः ।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित्
।। ११९ ।।' इति ।

न केवलमेकैकाभ्यासे फलाभावः, किं तु तत्स्वरूपमपि न सिध्यतीत्याह––

'तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च ।
मिथः कारणतां गत्वा दुःसाधानि स्थितानि हि
।। ११३ ।।' इति ।

त्रयाणामेतेषां मध्ये द्वयोर्द्वयोर्मेलने त्रीणि द्वन्द्वानि भवन्ति । तत्र मनोनाशवासनाक्षयद्वन्द्वस्यान्योन्यकारणत्वं व्यतिरेकमुखेनाह––

'यावद्विलीनं न मनो न तावद्वासनाक्षयः ।
न क्षीणा वासना यावत्तावच्चित्तं न शाम्यति
।। ११० ।।'

प्रदीपज्वालासंतानवद् वृत्तिसंतानरूपेण परिणममानमन्तःकरणद्रव्यं मननात्मकत्वान्मन इत्युच्यते । तस्य नाशो नाम वृत्तिरूपं परिणामं परित्यज्य निरुद्धत्वाकारेण परिणामः । तथा च पतञ्जलिर्योगशास्त्रे सूत्रयामास––'व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः' (३. ९)

इति । व्युत्थानसंस्कारा अभिभूयन्ते; निरोधसंस्काराः प्रादुर्भवन्ति; निरोधयुक्तः क्षणश्चित्तेनान्वीयते; सोऽयं मनोनाश इत्यवगन्तव्यम् । पूर्वापरपरामर्शमन्तरेण सहसोत्पद्यमानस्य क्रोधादिवृत्तिविशेषस्य हेतुश्चित्तगतः संस्कारो वासना, पूर्वपूर्वाभ्यासेन चित्ते वास्यमानत्वात् । तस्याश्च वासनायाः क्षयो नाम विवेकजन्यायां शान्तिदान्त्यादिशुद्धवासनायां दृढायां सत्यपि बाह्यनिमित्ते क्रोधाद्यनुत्पत्तिः । तत्र मनोनाशाभावे वृत्तिषूत्पद्यमानासु कदाचिद् बाह्यनिमित्तेन क्रोधाद्युत्पत्तेर्नास्ति वासनाक्षयः । अक्षीणायां तु वासनायां तथैव वृत्त्युत्पादनान्नास्ति मनोनाशः । तत्त्वज्ञानमनोनाशयोः परस्परकारणत्वं व्यतिरेकमुखेणाह––

'यावन्न तत्त्वविज्ञानं तावच्चित्तशमः कुतः ।
यावन्न चित्तोपशमो न तावत् तत्त्ववेदनम्
।। १११।।' इति ।

'इदं सर्वमात्मैव, प्रतीयमानं तु रूपरसादिकं जगन्मायामयम् न त्वेतद्वस्तुतोऽस्ति' इति निश्चयस्तत्त्वज्ञानम् । तस्यानुत्पत्तौ रूपरसादिविषयाणां सद्भावे सति तद्गोचराश्चित्तवृत्तयो न निवारयितुं शक्यन्ते यथा प्रक्षिप्यमाणेष्विन्धनादिषु वह्निज्वाला न निवार्यते तद्वत् । असति चित्तोपशमे वृत्तिभिर्गृह्यमाणेषु रूपादिषु 'नेह नानास्ति किंचन' (कठ.उ.४.११) इति श्रुतेः 'यजमानः प्रस्तरः' इत्यादेरिव प्रत्यक्षविरोधशङ्कया 'ब्रह्माद्वितीयम्' इत्येतादृशस्तत्त्वनिश्चयो नोदियात् । वासनाक्षयतत्त्वज्ञानयोः परस्परकारणत्वं व्यतिरेकमुखेनाह––

'यावन्न वासनानाशस्तावत् तत्त्वागमः कुतः ।
यावन्न तत्त्वसंप्राप्तिर्न तावद् वासनाक्षयः ।। ११२ ।।'
इति ।

क्रोधादिवासनास्वनष्टासु शमदमादिसाधनाभावान्न तत्त्वज्ञानमुदेति। अज्ञाते चाद्वितीयब्रह्मतत्त्वे क्रोधादिनिमित्तस्य सत्यत्वभ्रमानपायान्न वासना क्षीयते । यथोक्तानां त्रयाणां द्वन्द्वानामन्योन्यकारणत्वमन्वयमुखेन वयमुदाहरामः । मनसि नष्टे सति संस्कारोद्बोधकस्य बाह्यनिमित्तस्याप्रतीतौ वासना क्षीयते; क्षीणायां च वासनायां हेत्वभावेन क्रोधादिवृत्त्यनुदयान्मनो नश्यति। तदिदं मनोनाशवासनाक्षयद्वन्द्वम् । 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतेरात्मैक्याभिमुखवृत्तेर्दर्शनहेतुत्वादितरकृत्स्नवृत्तिनाशस्य तत्त्वज्ञानहेतुत्वमवगम्यते । सति च तत्त्वज्ञाने, मिथ्याभूते जगति नरविषाणादाविव धीवृत्त्यनुदयादात्मनश्च दृष्टत्वेन पुनर्वृत्त्यनुपयोगान्निरिन्धनाग्निवन्मनो नश्यति। तदिदं मनोनाशतत्त्वज्ञानयोर्द्वन्द्वम् । तत्त्वज्ञानस्य क्रोधादिवासनाक्षयहेतुतां वार्त्तिककार आह––

'रिपौ बन्धौ स्वदेहे च समैकात्म्यं प्रपश्यतः ।
विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ।।'
(नै. २. १८) इति ।

क्रोधादिवासनाक्षयरूपस्य शमादेर्ज्ञानहेतुत्वं प्रसिद्धम् । वसिष्ठोऽपि––

'गुणाः शमादयो ज्ञानाच्छमादिभ्यस्तथा ज्ञता ।
परस्परं विवर्धेते द्वे पद्मसरसी इव ।।'
(४. १०७) इति ।

तदिदं वासनाक्षयतत्त्वज्ञानयोर्द्वन्द्वम् । तत्त्वज्ञानादीनां त्रयाणां संपादने साधनमाह–

'तस्माद्राघव यत्नेन पौरुषेण विवेकिना ।
भोगेच्छां दूरतस्त्यक्त्वा त्रयमेतत्समाश्रयेत्
।। ११४ ।।' इति ।

पौरुषो यत्नः केनाप्युपायेनावश्यं संपादयिष्यामीत्येवंविधोत्साहरूपो निर्बन्धः । विवेको नाम विभज्यनिश्चयः—तत्त्वज्ञानस्य श्रवणादिकं साधनम्, मनोनाशस्य योगः, वासनाक्षयस्य प्रतिकूलवासनोत्पादनमिति । भोगेच्छायाः स्वल्पाया अप्यभ्युपगमे 'हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' (मनु. २. ९४) इति न्यायेनातिप्रसङ्गस्य दुर्वारत्वाद् दूरत इत्युक्तम् । ननु पूर्वत्र, विविदिषासंन्यासस्य तत्त्वज्ञानं फलम्, विद्वत्संन्यासस्य जीवन्मुक्तिरिति व्यवस्था वर्णिता; तथा च सति प्रथमतस्तत्त्वज्ञानं संपाद्य पश्चाद्विद्वत्संन्यासं कृत्वा जीवतः स्वस्य बन्धरूपयोर्वासनामनोवृत्त्योर्विनाशः संपादनीय इति प्रतिभाति; अत्र तु तत्त्वज्ञानादीनां सहैवाभ्यासो नियम्यते; अतः पूर्वोत्तरविरोध इति चेत्, नायं दोषः, प्रधानोपसर्जनभावेन व्यवस्थोपपत्तेः । विविदिषासंन्यासिनस्तत्त्वज्ञानं प्रधानम्, मनोनाशवासनाक्षयावुपसर्जनीभूतौ; विद्वत्संन्यासिनस्तु तद्वैपरीत्यम्; अतः सहाभ्यास उभयत्राप्यविरुद्धः । न च तत्त्वज्ञानोत्पत्तिमात्रेण कृतार्थस्य किमुत्तरकालीनेनाभ्यासप्रयासेनेति शङ्कनीयम्, जीवन्मुक्तिप्रयोजननिरूपणेन परिहरिष्यमाणत्वात् । ननु विद्वत्संन्यासिनो वेदनसाधनश्रवणा-

ह्यनुष्ठानवैफल्याद् वेदनस्य च स्वरूपेण कर्तुमकर्तुमन्यथा वा कर्तुमशक्यस्याननुष्ठेयत्वादुपसर्जनत्वेऽप्युत्तरकालीनोऽभ्यासः कीदृश इति चेत्, केनापि द्वारेण पुनः पुनस्तत्त्वानुस्मरणमिति ब्रूमः । तादृशश्चाभ्यासो लीलोपाख्याने (ल. वा. ६) दर्शितः—

'तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ज्ञानाभ्यासं विदुर्बुधाः ।। १०८ ।।
सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव तत्सदा ।
इदं जगदहं चेति बोधाभ्यासं विदुः परे ।। १११ ।।'

मनोनाशवासनाक्षयाभ्यासावपि तत्रैव दर्शितौ—

'अत्यन्ताभावसंपत्तौ ज्ञातुर्ज्ञेयस्य वस्तुनः ।
युक्त्या शास्त्रैर्यतन्ते ये ते तत्राभ्यासिनः स्थिताः
।। ११० ।।' इति ।

ज्ञातृज्ञेययोर्मिथ्यात्वधीरभावसंपत्तिः । स्वरूपेणाप्यप्रतीतिरत्यन्ताभावसंपत्तिः । युक्तिर्योगः । सोऽयं मनोनाशाभ्यासः ।

'दृश्यासंभवबोधेन रागद्वेषादितानवे ।
रतिर्नवोदिता यासौ ब्रह्माभ्यासः स उच्यते ।। ११२ ।।'
इति ।

सोऽयं वासनाक्षयाभ्यासः । तेष्वेतेषु त्रिष्वभ्यासेषु सामान्येन प्रतीयमानेषु प्रधानोपसर्जनभावो न विवेक्तुं शक्यत इति चेत् । मैवम्, प्रयोजनानुसारेण विवेक्तुं शक्यत्वात् । मुमुक्षोः पुरुषस्य जीवन्मुक्तिर्विदेहमुक्तिश्चेति प्रयोजनद्वयम् । अत एव 'विमुक्तश्च विमुच्यते' (कठ. उ. २. १. १) इति श्रूयते । तत्र जीवतः

पुरुषस्य दैवसंपदा मोक्षः, आसुरसंपदा बन्धः एतच्च षोडशाध्याये भगवताभिहितम्–

'दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।। ५ ।।'

इति ।

ते च संपदौ तत्रैवाभिहिते–

'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।। १ ।।
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ।। २ ।।
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ।। ३ ।।
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ।।४।।' इति ।

पुनरप्याध्यायपरिसमाप्तेरासुरसंपत्प्रपञ्चिता। तत्राशास्त्रीयायाः स्वभावसिद्धाया आसुरसंपदो दुर्वासनायाः शास्त्रीयया पुरुषप्रयत्न-साध्यया दैवसंपदा सद्वासनया क्षये सति जीवन्मुक्तिर्भवति ।

वासनाक्षयवन्मनोनाशस्यापि जीवन्मुक्तिहेतुत्वं श्रूयते[1]

'मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ।। २ ।।
यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।
अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ।। ३ ।।

[1] अमृतबिन्दूपनिषदि ।

निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि ।
यदा यात्युन्मनीभावं तदा तत्परमं पदम् ।। ४ ।।
तावदेव निरोद्धव्यं यावद् हृदि गतं क्षयम् ।
एतज्ज्ञानं च मोक्षश्च शेषो ग्रन्थस्य विस्तरः ।। १५ ।।'
इति ।

बन्धो द्विविधः, तीव्रो मृदुश्च । तत्रासुरसंपत्साक्षादेव क्लेशहेतुत्वात् तीव्रो बन्धः । द्वैतमात्रप्रतीतिस्तु स्वयमक्लेशरूपत्वादासुरसंपदुत्पादकत्वाच्च मृदुर्बन्धः । तत्र वासनाक्षयेण तीव्रबन्ध एव निवर्तते, मनोनाशेन तूभयम् । तर्हि मनोनाशेनैवालम्, वासनाक्षयस्तु निरर्थक इति चेन्न; भोगहेतुना प्रबलेन प्रारब्धेन व्युत्थापिते मनसि वासनाक्षयस्य तीव्रबन्धनिवारणार्थत्वात्, भोगस्य मृदुबन्धेनाप्युपपत्तेः । तामसवृत्तयस्तीव्रबन्धः । सात्त्विकराजसवृत्तिद्वयं मृदुबन्धः । एतच्च

'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।'
(भ. गी. २. ५६)

इत्यत्र स्पष्टीकृतम् । एवं च सति मृदुबन्धस्याभ्युपेयत्वात् तीव्रबन्धस्य वासनाक्षयेणैव निवृत्तेरनर्थको मनोनाश इति चेन्न, दुर्बलप्रारब्धापादितानामवश्यंभाविभोगानां प्रतीकारार्थत्वात् । तादृग्भोगस्य प्रतीकारनिवर्त्यत्वमभिप्रेत्येदमाहुः—

'अवश्यंभाविभोगानां प्रतीकारो भवेद्यदि ।
तदा दुःखैर्न लिप्येरन्नलरामयुधिष्ठिराः ।।'
(पञ्च. ७. १५६) इति ।

तदेवं जीवन्मुक्तिं प्रति वासनाक्षयमनोनाशयोः साक्षात्साधनत्वाद् प्राधान्यम्; तत्त्वज्ञानं तूभयोत्पादनेन व्यहितत्वादुपसर्जनम्। तत्त्वज्ञानस्य वासनाक्षयहेतुत्वं बहुशः श्रुतौ श्रूयते—

'ज्ञात्वा देवं सर्वपाशापहानिः' (श्वे. उ. १. १. ११) 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' (कठ. उ. १. १. १२) 'तरति शोकमात्मवित्' (छा. उ. ७. १. ३.) 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' (ईश. उ. ७) 'ज्ञात्वा देवं मुच्यते सर्वपाशैः' (श्वे. उ. १. १. ८) इति। मनोनाशहेतुत्वं च तत्त्वज्ञानस्य श्रुतिसिद्धम्। विद्यादशामभिप्रेत्येदं श्रूयते—'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् केन कं जिघ्रेत्' (बृ. उ. २. ४. १४) इत्यदि।

गौडपादाचार्यश्चहु

'आत्मतत्त्वानुबोधेन न संकल्पयते यदा।
अमनस्तां तदा याति ग्राह्याभावे तदग्रहः॥'
(३. ३२) इति।

जीन्मुक्तेर्वासनाक्षयमनोनाशाविव विदेहमुक्तेः साक्षात्साधनत्वाज्ज्ञानं प्रधानम्,

'ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते' इति स्मृतेः। केवलस्यात्मनो भावः कैवल्यं देहादिरहितत्वम्। तच्च ज्ञानादेव प्राप्यते, सदेहत्वस्याज्ञानकल्पितत्वेन ज्ञानैकनिवर्त्यत्वात्। ज्ञानादेवेत्येवकारेण कर्मव्यावृत्तिः 'न कर्मणा न प्रजया धनेन' (कै. उ. ४. १२. ३) इति श्रुतेः। यस्तु ज्ञानशास्त्रमनभ्यस्य यथासंभवं वासनाक्षयमनोनाशावभ्यस्य सगुणं ब्रह्मोपास्ते न तस्य

कैवल्यमस्ति, लिङ्गदेहस्यानपायात् । अत एवकारेण तावपि व्यावर्त्येते । येन मुच्यत इत्यस्यायमर्थः––येन ज्ञानप्रापितकेवलत्वेन कृत्स्नबन्धाद्विमुच्यत इति । बन्धश्चानेकविधः––अविद्याग्रन्थिः, अब्रह्मत्वम्, हृदयग्रन्थिः, संशयः, कर्माणि, असर्वकामत्वम्, मृत्युः, पुनर्जन्मेत्यादिशब्दैस्तत्र तत्र व्यवहारात् । त एते बन्धाः सर्वेऽपि ज्ञाननिवर्त्याः । तथा च श्रुतयः––'एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थि विकिरतीह सोम्य' (मुण्ड. उ. २. २. १०) । 'ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड. उ. ३. २. ६)

'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥'
(मुण्ड. उ. २. २. ८)

'यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान्कामान्सह' (तै. उ. २. २. १); 'तमेव विदित्वातिमत्युमेति' (श्वे. उ. ३.८)

'यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद् भूयो न जायते ॥'
(कठ. उ. १. ३. ८)

'य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति' (बृ. उ. १. ४. १०) इत्यादीन्यसर्वज्ञत्वादिबन्धनिवृत्तिपराणि वाक्यान्यत्रोदाहरणीयानि । सेयं विदेहमुक्तिर्ज्ञानोत्पत्तिसमकालीना ज्ञेया, ब्रह्मण्यविद्यारोपितानामेतेषां बन्धानां विद्यया विनाशे सति पुनरुत्पत्त्यसंभवादननुभवाच्च । तदेतद्विद्यासमकालीनत्वं भाष्यकारः समन्वयसूत्रे (ब्र. सू. १. १. ४) प्रपञ्चयामासः, 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' (ब्र. सू. ४. १. १३) इत्यत्र च । ननु वर्तमानदेहपातानन्तरभाविनी विदेहमुक्तिरिति

बहवो वर्णयन्ति । तथा च श्रुतिः—'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छा. उ. ६. १४. २) इति ।

वाक्यवृत्तावप्युक्तम्—

'प्रारब्धकर्मवेगेन जीवन्मुक्तो यदा भवेत् ।
कंचित्कालमथारब्धकर्मबन्धस्य संक्षये ।। ५२ ।।
निरस्तातिशयानन्दं वैष्णवं परमं पदम् ।
पुनरावृत्तिरहितं कैवल्यं प्रतिपद्यते' ।। ५३ ।। इति ।

सूत्रकारोऽप्याह—'भोगेन त्वितरे क्षपयित्वा संपद्यते' (ब्र. सू. ४. १. १९) इति । इतरे प्रारब्धपुण्यपापे ।

वसिष्ठोऽप्याह—

'जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ।।'

(ल. वा. ५. ९८) इति ।

नायं दोषः, विवक्षाविशेषेण मतद्वयस्याविरोधात् । विदेहमुक्तिरित्यत्रत्येन देहशब्देन कृत्स्नं देहजातं विवक्षित्वा बहुभिर्वर्णितम् । अस्माभिस्तु भाविदेहमात्रविवक्षयोच्यते, तदनारम्भायैव ज्ञानसंपादनात् । अयं तु देहः पूर्वमेवारब्धः, अतो ज्ञानेनापि नास्यारम्भो वारयितुं शक्यते । एतद्देहनिवृत्तिरपि न ज्ञानफलम्, अज्ञानिनामप्यारब्धकर्मक्षये तन्निवृत्तेः । तर्हि वर्तमानलिङ्गदेहनिवृत्तिर्ज्ञानफलमस्तु, ज्ञानमन्तरेण तदनिवृत्तेरिति चेन्न; सत्यपि ज्ञाने जीवन्मुक्तेस्तन्निवृत्त्यभावात् । ननु ज्ञानस्य कंचित्कालं प्रारब्धेन कर्मणा प्रतिबन्धेनानिवर्तकत्वेऽपि प्रतिबन्धक्षये लिङ्गदेहनिवर्तकत्वं भविष्यतीति चेन्न, पञ्चपादिकाचार्येण 'यतो

ज्ञानमज्ञानस्यव निवर्तकम् ' इत्युपपादितत्वात् । तर्हि लिङ्गदेह-निवृत्तेः किं साधनमिति चेत्, सामग्रीनिवृत्तिरिति ब्रूमः। द्विविधं हि कार्यनिवर्तकम्, विरोधिसद्भावः सामग्रीनिवृत्तिश्चेति। तद्यथा विरोधिना वायुना तैलवर्त्तिसामग्रीनिवृत्त्या वा दीपो निवर्तते। लिङ्गदेहस्य साक्षाद्विरोधिनं न पश्यामः। सामग्री हि द्विविधा प्रारब्धमनारब्धं चेति। ताभ्यामुभाभ्यामज्ञानिनां लिङ्गदेह इहामुत्र चावतिष्ठते। ज्ञानिनां त्वनारब्धस्य ज्ञानेन निवृत्तेः प्रारब्धस्य च भोगेन निवृत्तेः, तैलवर्तिरहितदीप-वत्सामग्रीनिवृत्त्या लिङ्गदेहो निवर्तते। अतो न तन्निवृत्तिर्ज्ञान-फलम्। नन्वनेन न्यायेन भाविदेहानारम्भोऽपि न ज्ञानफलम्। तथा हि—किमनारम्भ एव फलम्, किं वा तत्परिपालनम्? नाद्यः, तस्य प्रागभावरूपत्वेनानादिसिद्धत्वात्। न द्वितीयः, अनारब्धकर्मरूपसामग्रीनिवृत्त्यैव भाविदेहारम्भप्रागभावपरि-पालनसिद्धेः। न च तन्निवृत्तिः फलम्, अविद्यानिवृत्तेरेव विद्या-फलत्वात्। नैष दोषः, भाविजन्मानारम्भादीनां विद्याफलत्वस्य प्रामाणिकत्वात्। 'यस्माद् भूयो न जायते' (कठ. उ. १. ३. ८) इत्याद्युदाहृताः श्रुतयस्तत्र प्रमाणम्। न च ज्ञानमज्ञानस्यैव निवर्तकमिति न्यायेन विरोधः। अज्ञानसहभावनियतानामब्रह्म-त्वादीनामज्ञानशब्देन पञ्चपादिकाचार्यैर्विवक्षितत्वात्। अन्यथा-नुभवविरोधः। अनुभूयते ह्यज्ञाननिवृत्तिवदब्रह्मत्वादिनिवृत्तिरपि। तस्माद्भाविदेहराहित्यलक्षणा विदेहमुक्तिर्ज्ञानसमकालीना। तथा च याज्ञवल्क्यवचनं श्रूयते—'अभयं वै जनक प्राप्तोऽसि' (बृ. उ. ४. २. ४) इति, 'एतावदरे खल्वमृतत्वम्' (बृ. उ. ४. ५. १५) इति च। श्रुत्यन्तरेऽपि 'तमेवं विद्वानमृत इह भवति'

(पु. सू.) इति। यद्युत्पन्नेऽपि तत्त्वज्ञाने तत्फलभूता विदेह-मुक्तिस्तदानीं न भवेत्, कालान्तरे च भवेत्, तदा ज्योतिष्टो-मादाविव ज्ञानजन्यमपूर्वं किंचित्कल्प्येत ; तथा च कर्मशास्त्र एव ज्ञानशास्त्रमन्तर्भवेत्। अथोच्यते मन्त्रादिप्रतिबद्धाग्निवत्प्रारब्ध-प्रतिबद्धं ज्ञानं कालान्तरे विदेहमुक्तिं दास्यतीति। मैवम्, अविरोधात्। न ह्यस्मदभिमता भाविदेहात्यन्ताभावलक्षणा विदेहमुक्तिर्वर्तमानदेहमात्रस्थापकेन प्रारब्धेन विरुध्यते, येन प्रतिबध्येत। किंच क्षणिकत्वेन कालान्तरे स्वयमविद्यमानं ज्ञानं कथं मुक्तिं दद्यात्? ज्ञानान्तरं चरमसाक्षात्कारलक्षण-मुत्पत्स्यत इति चेन्न ; साधनाभावात्। प्रतिबन्धकप्रारब्ध-निवृत्त्यैव सह गुरुशास्त्रदेहेन्द्रियाद्यशेषजगत्प्रतिभासनिवृत्तेः किं तत्साधनं स्यात्? तर्हि 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे. उ. १. १०) इत्यस्याः श्रुतेः कोऽर्थ इति चेत् ; आरब्धान्ते निमित्ताभावाद् देहेन्द्रियाद्यशेषनैमित्तिकनिवृत्तिरित्येवार्थः। ततो भवदभिमता वर्तमानदेहराहित्यलक्षणा विदेहमुक्तिः पश्चादस्तु देहपातानन्तरम् ; अस्मदभिमता तु ज्ञानसमकालीनैव। एतदेवा-भिप्रेत्य भगवाञ्शेष आह–

'तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम्।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः॥ ८१॥' इति।

तस्माद्विदेहमुक्तौ साक्षात्साधनस्य तत्त्वज्ञानस्य प्रधानत्वमुपपन्नम्। वासनाक्षयमनोनाशयोर्ज्ञानसाधनत्वेन व्यवहितत्वादुपसर्जनत्वम्। आसुरवासनाक्षयकारिण्या दैववासनाया ज्ञानसाधनत्वं श्रुति-स्मृत्योरुपलभ्यते–'शान्तो दान्त उपरतस्तितिक्षुः समाहितो

भूत्वात्मन्येवात्मानं पश्येत्' (बृ. उ. ४. ४. २३) इति श्रुतिः। स्मृतिरपि–

'अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ।।
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।।
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ।।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ।।
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ।।'
(भ. गी. १३. ८–१२) इति।

अन्यस्मिन्नहंबुद्धिरभिष्वङ्गः। ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानसाधनमित्यर्थः। मनोनाशस्यापि ज्ञानसाधनत्वं श्रुतिस्मृतिप्रसिद्धम्—'ततस्तु तं पश्यति निष्कलं ध्यायमानः' (मु. उ. ३. १. ८.) इति श्रुतिः। 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' (कठ. उ. २. १२) इति च। प्रत्यगात्मसमाधिप्राप्त्या देवं ज्ञात्वेत्यर्थः।

'यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै विद्यात्मने नमः ।।'
(म. भा. शा. ४६. ५५)

इति स्मृतिः।

तदेवं तत्त्वज्ञानादीनां त्रयाणां विदेहमुक्तिजीवन्मुक्तिवशाद् गुणप्रधानभावव्यवस्था सिद्धा । ननु विविदिषासंन्यासिना संपादितानामेतेषां किं विद्वत्संन्यासादूर्ध्वमनुवृत्तिमात्रम्, किं वा पुनरपि संपादनप्रयत्नोऽपेक्षितः । नाद्यः, तत्त्वज्ञानस्येवान्ययोरप्ययत्नसिद्धत्वे प्राधान्यप्रयुक्तादराभावप्रसङ्गात् । न द्वितीयः, इतरयोरिव ज्ञानस्यापि प्रयत्नसापेक्षत्वे सत्युपसर्जनत्वप्रयुक्तौदासीन्याभावप्रसङ्गात् । नायं दोषः, ज्ञानस्यानुवृत्तिमात्रमितरयोर्यत्नसाध्यत्वमित्यङ्गीकारात् । तथा हि—विद्याधिकारी द्विविधः, कृतोपास्तिरकृतोपास्तिश्चेति । तत्रोपास्यसाक्षात्कारपर्यन्तामुपास्तिं कृत्वा यदि ज्ञाने प्रवर्तेत तदा वासनाक्षयमनोनाशयोर्दृढतरत्वेन ज्ञानादूर्ध्वं विद्वत्संन्यासजीवन्मुक्ती स्वत एव सिध्यतः । तादृश एव शास्त्राभिमतो मुख्यो विद्याधिकारी । ततस्तं प्रति शास्त्रेषु सहोपन्यासात्, स्वरूपेण विविक्तावपि विद्वत्संन्यासविविदिषासंन्यासौ संकीर्णाविव प्रतिभासेते । इदानींतनास्तु प्रायेणाकृतोपास्तय एवौत्सुक्यमात्रात्सहसा विद्यायां प्रवर्तन्ते । वासनाक्षयमनोनाशौ च तात्कालिकौ संपादयन्ति । तावता श्रवणमनननिदिध्यासनानि निष्पाद्यन्ते । तैश्च दृढाभ्यस्तैरज्ञानसंशयविपर्ययनिरासात् तत्त्वज्ञानं सम्यगुदेति । उदितस्य ज्ञानस्य बाधकप्रमाणाभावान्निवृत्ताया अविद्यायाः पुनरुत्पत्तिकारणाभावाच्च नास्ति तस्य शैथिल्यम् । वासनाक्षयमनोनाशौ तु दृढाभ्यासाभावाद् भोगप्रदेन प्रारब्धेन तदा तदा बाध्यमानत्वाच्च सवातप्रदेशदीपवत्सहसा निवर्तेते । तथा च वसिष्ठः—

'पूर्वेभ्यस्तु प्रयत्नेभ्यो विषमोऽयं हि संमतः ।
दुःसाधो वासनात्यागः सुमेरून्मूलनादपि ॥'
(ल. वा. २८. १०९) इति ।

अर्जुनोऽपि—

'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥'
(भ. गी. ६. ३४) इति ।

तस्मादिदानींतनानां विद्वत्संन्यासिनां ज्ञानस्यानुवृत्तिमात्रम् । वासनाक्षयमनोनाशौ तु प्रयत्नसंपाद्याविति स्थितम् । ननु केयं वासना यस्याः क्षयाय प्रयतितव्यमिति चेत् तत्स्वरूपमाह वसिष्ठः—

'दृढभावनया त्यक्तपूर्वापरविचारणम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥
भावितं तीव्रसंवेगादात्मना यत्तदेव सः ॥
भवत्याशु महाबाहो विगतेतरसंस्मृतिः ॥
तादृग्रूपो हि पुरुषो वासनाविवशीकृतः ।
संपश्यति यदेवैतत् सद्वस्त्विति विमुह्यति ॥
वासनावेगवैवश्यात् स्वरूपं प्रजहाति तत् ।
भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मदवशादिव ॥'
(ल. वा. २८. ४८—५१) इति ।

अत्र च स्वस्वदेशाचारकुलधर्मभाषाभेदतद्गतापशब्दसुशब्दादिषु प्राणिनामभिनिवेशः सामान्यत उदाहरणम् । विशेषतस्तु भेदानुक्त्वा पश्चादुदाहरामः । यथोक्तां वासनामभिप्रेत्य बृहदारण्यके

श्रूयते—' स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते ' (बृ. उ. ४. ४. ५) इति । वासनाभेदो वाल्मीकिना दर्शितः—

' वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।
मलिना जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ॥
अज्ञानसुघनाकारा घनाहंकारशालिनी ।
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥
पुनर्जन्माङ्कुरं त्यक्त्वा स्थिता संभृष्टबीजवत् ।
देहार्थं ध्रियते ज्ञातज्ञेया शुद्धेति चोच्यते ॥ '
(ल. वा. १. १०—१२) इति ।

देहादीनां पञ्चकोशानां तत्साक्षिणश्चिदात्मनश्च भेदावरकमज्ञानम्, तेन सुष्ठु घनीभूत आकारो यस्याः सेयमज्ञानसुघनाकारा । यथा क्षीरं तक्रमेलनेन घनीभवति, यथा वा विलीनं घृतमत्यन्तशीतलप्रदेशे चिरमवस्थापितं सुघनीभवति तथा वासना द्रष्टव्या । घनीभावश्चात्र भ्रान्तिपरम्परा । तां चासुरसंपद्विवरणे भगवानाह—

' प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत् कामहैतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद् गृहीत्वासद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ।।
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ।। '

(भ. गी. १६. ८—१२) इति ।

त आसुरा जगदसत्यमाहुः । नास्ति सत्यं वेदपुराणादिप्रमाणं यस्मिंस्तादृशं जगदाहुः । वेदानां प्रामाण्यं न मन्यन्त इत्यर्थः । अत एव नास्तीश्वरः कर्ता व्यवस्थापकश्च यस्मिंस्तादृशं जगदाहुः । तर्हि कुतोऽस्य जगत उत्पत्तिं वदन्तीत्यत्राह—अपरस्परेति । अपरश्च परश्चेत्यपरस्परम् । अपरस्परतोऽन्योन्यतः स्त्रीपुरुष-मिथुनात् संभूतं जगत् । किमन्यत्कारणमस्य ? नास्त्यन्यत्किंचित्; किं तु कामहैतुकम्, स्त्रीपुरुषयोः काम एव प्रवाहरूपेण हेतुरस्ये-त्याहुरित्यर्थः । घनाहंकारश्च तत्रैवोदाहृतः—

' इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ।।
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ।।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ।।
अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ।। '

(भ. गी. १६. १३—१६) इति।

एतेन पुनर्जन्मकारणत्वमुदाहृतं भवति, तच्च पुनः प्रपञ्चितम्—

‘ आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ।।
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।।
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ।। ’
(भ. गी. १६. १७—२०) इति ।

शुद्धवासना तु ज्ञातज्ञेया । ज्ञेयस्वरूपं त्रयोदशाध्याये भगवानाह—

‘ ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ।।
सर्वतः पाणिपादं तत् सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।।
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ।।
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात् तदविज्ञेयं दूरस्थं चान्तिके च तत् ।।
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ।।
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ।। ’
(भ. गी. १३. १२—१७) इति ।

अत्र तटस्थलक्षणस्वरूपलक्षणाभ्यामवगन्तुं सोपाधिकनिरुपाधिकस्वरूपद्वयमुपन्यस्तम्। कदाचित्संबन्धि सद्यल्लक्षयति तत्तटस्थलक्षणम्। यथा 'काकवद् देवदत्तगृहम्' इति। तथा कालत्रयसंबन्धि सद्यल्लक्षयति तत्स्वरूपलक्षणम्। यथा 'प्रकृष्टप्रकाशश्चन्द्र:' इति। ननु त्यक्तपूर्वापरविचारत्वं वासनालक्षणमुक्तम्; ज्ञेयज्ञानं च विचारजन्यम्; अतो न शुद्धायां तल्लक्षणमस्ति। मैवम्, लक्षणे दृढभावनयेत्युक्तत्वात्। यथा बहुषु जन्मसु दृढभावितत्वेनास्मिञ्जन्मनि विनैव परोपदेशमहंकारममकारकामक्रोधादयो मलिनवासना उत्पद्यन्ते, तथा प्राथमिकस्य बोधस्य विचारजन्यत्वेऽपि दीर्घकालनैरन्तर्यसत्कारैर्भाविते तत्त्वे पश्चाद्वाक्ययुक्तिपरामर्शमन्तरेणैव पुरोवर्तिघटादिवत्सहसा तत्त्वं परिस्फुरति; तादृश्या बोधानुवृत्त्या सहित इन्द्रियव्यवहार: शुद्धवासना। सा च देहजीवनमात्रायोपयुज्यते, नतु दम्भदर्पाद्यासुरसंपदुत्पादनाय, नापि जन्मान्तरहेतुधर्माधर्मोत्पादनाय। यथा भृष्टानि व्रीह्यादिबीजानि कुसूलपूरणमात्रायोपयुक्तानि, न तु रुचिरान्नाय नापि सस्यनिष्पत्तये, तद्वत्। मलिना च वासना त्रिविधा, लोकवासना शास्त्रवासना देहवासना चेति। सर्वे जना यथा मां न निन्दन्ति यथा वा स्तुवन्ति तथैव सर्वदाचरिष्यामीत्यभिनिवेशो लोकवासना। तस्याश्च संपादयितुमशक्यत्वान्मलिनत्वम्। तथा हि—

'को न्वस्मिन् सांप्रतं लोके गुणवान् कश्च वीर्यवान्।'
(रामा. १. १. २)

इत्यादिना बहुधा वाल्मीकि: पप्रच्छ।

'इक्ष्वाकुवंशप्रभवो रामो नाम जनै: श्रुत:।'
(रामा. १. १)

इत्यादिना प्रत्युत्तरं नारदो ददौ । तादृशस्यापि रामस्य पतिव्रता-शिरोमणिभूताया जगन्मातुः सीतायाश्च श्रोतुमशक्यो जनापवादः संप्रवृत्तः ; किमु वक्तव्यमन्येषाम् ? तथा हि देशविशेषेण परस्परं निन्दाबाहुल्यमुपलभ्यते। दाक्षिणात्यैर्विप्रैरौत्तराहा वेदविदो विप्रा मांसभक्षिणो निन्द्यन्ते । औत्तराहैश्च मातुलसुतोद्वाहिनो यात्रासु मृद्भाण्डवाहिनो दाक्षिणात्या निन्द्यन्ते । बह्वृचा आश्वलायन-शाखां काण्वशाखायाः प्रशस्तां मन्यन्ते। वाजसनेयिनस्तु वैपरी-त्येन । एवं स्वस्वकुलगोत्रबन्धुवर्गेष्टदेवतादिप्रशंसा परकीयनिन्दा च आविद्वदङ्गनागोपालं सर्वत्र प्रसिद्धा । एतदेवाभिप्रेत्योक्तम्—

'शुचिः पिशाचो विचलो विचक्षणः
क्षमोऽप्यशक्तो बलवांश्च दुष्टः ।
निश्चित्तचोरः सुभगोऽपि कामी
को लोकमाराधयितुं समर्थः ।।' इति,
'विद्यते न खलु कश्चिदुपायः-
सर्वलोकपरितोषकरो यः ।
सर्वथा स्वहितामाचरणीयं
किं करिष्यति जनो बहुजल्पः।।' इति च ।।

अतो लोकवासनाया मलिनत्वमभिप्रेत्य योगीश्वरस्य तुल्यनिन्दा-स्तुतित्वं मोक्षशास्त्रेषु वर्णितम् । शास्त्रवासना त्रिविधा, पाठ-व्यसनं बहुशास्त्रव्यसनमनुष्ठानव्यसनं चेति । पाठव्यसनं भरद्वाजे ऽवगम्यते । स हि पुरुषायुषत्रयेण बहून्वेदानधीत्येन्द्रेण चतुर्थायुषि प्रलोभितस्तत्रापि परिशिष्टवेदाध्ययनायोद्यमं चकार । तस्यापि पाठस्याशक्यत्वान्मलिनवासनात्वम् । तां चाशक्यतामिन्द्रः

प्रतिबोध्य पाठान्निवर्त्य ततोऽप्यधिकाय पुरुषार्थाय सगुणब्रह्मविद्यामुपदिदेश। तदेतत्सर्वं तैत्तिरीयब्राह्मणे द्रष्टव्यम्। तथैवात्यन्तिकपुरुषार्थाभावाद्बहुशास्त्रव्यसनस्य मालिन्यं कावषेयगीतायामुपलभ्यते—'कश्चिन्मुनिर्दुर्वासा बहुविधशास्त्रपुस्तकभारैः सह महादेवं नमस्कर्तुमागतस्तत्सभायां मुनिना नारदेन भारवाहिगर्दभसाम्यमापादितः कोपात्पुस्तकानि लवणार्णवे परित्यज्य महादेवेनात्मविद्यायां प्रवर्तितः' इति। आत्मविद्या चानन्तर्मुखस्य गुरुकारुण्यरहितस्य न वेदशास्त्रमात्रेणोत्पद्यते। तथा च श्रुतिः— 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन' (कठ. उ. १. २. २२) इति। अन्यत्राप्युक्तम्—

'बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम्।
अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम्॥' इति,
'अधीत्य चतुरो वेदान्धर्मशास्त्राण्यनेकशः।
ब्रह्मतत्त्वं न जानाति दर्वी पाकरसं यथा॥' इति च।

'नारदश्चतुःषष्टिकलाकुशलोऽप्यनात्मवित्त्वेनानुतप्तः सनत्कुमारमुपससाद' (छा. ७.) इति च्छन्दोगा अधीयते। अनुष्ठानव्यसनं विष्णुपुराणे निदाघस्योपलभ्यते। वासिष्ठरामायणे दाशूरस्य। निदाघो हि ऋभुणा पुनः पुनः प्रबोध्यमानोऽपि कर्मश्रद्धाजाड्यं चिरं न जहौ। दाशूरश्चात्यन्तश्रद्धाजाड्येनानुष्ठानाय शुद्धप्रदेशं भूमौ न क्वाप्युपलेभे। अस्याश्च कर्मवासनायाः पुनर्जन्महेतुत्वान्मलिनत्वम्। तथा चाथर्वणिका अधीयते—

'प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म।

एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यन्ति ।।
अविद्यायामन्तरे वर्तमानाः
स्वयं धीराः पण्डितंमन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः ।।
अविद्यायां बहुधा वर्तमाना
वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत्कर्मिणो न प्रवेदयन्ति रागा-
त्तेनातुराः क्षीणलोकाश्च्यवन्ते ।।
इष्टापूर्तं मन्यमाना वरिष्ठं
नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।
नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वे-
मं लोकं हीनतरं वा विशन्ति ।।'

(मु. उ. १. २. ७–१०)

भगवताप्युक्तम्–

'यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ।।
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ।।
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ।।
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ।।

यावानर्थ उदपाने सर्वतःसंप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ।। '
(भ. गी. २. ४२–६) इति ।

दर्पहेतुत्वाच्च शास्त्रवासनाया मलिनत्वम् । श्वेतकेतुरल्पेनैव कालेन सर्वान्वेदानधीत्य दर्पेण पितुरपि पुरतो विनयं न चकारेति च्छन्दोगाः षष्ठाध्याये पठन्ति । तथा बालाकिः कानिचिदुपासनान्यवगत्य दृप्त उशीनरादिषु बहुषु देशेषु दिग्विजयेन बहून्विप्रानवज्ञाय काश्यामजातशत्रुं ब्रह्मविच्छिरोमणिमनुशासितुं धाष्टर्च्यं चकारेति कौषीतकिनो वाजसनेयिनश्चाधीयते । देहवासनाप्यात्मत्वगुणाधानदोषापनयनभ्रान्तिभेदात् त्रिविधा । तत्रात्मत्वं भाष्यकार उदाजहार—' देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृता जना लौकायतिकाश्च प्रतिपन्नाः ' (ब्र. सू. भा. १. १. १) इति । ' स वा एष पुरुषोऽन्नरसमयः ' इत्यारभ्य ' तस्मादन्नं तदुच्यते ' (तै. उ. २. १. २) इत्यन्तेन ग्रन्थेन तामेव प्राकृतप्रतिपत्तिं तैत्तिरीयाः स्पष्टीकुर्वन्ति । ' विरोचनः प्रजापतिनानुशिष्टोऽपि स्वचित्तदोषेण देहात्मबुद्धिं दृढीकृत्यासुरान् सर्वाननुशशास ' इति च्छन्दोगा अष्टमाध्याये समामनन्ति । गुणाधानं द्विविधं लौकिकं शास्त्रीयं चेति । समीचीनशब्दादिसंपादनं लौकिकम् । कोमलध्वनिना गातुमध्येतुं वा तैलपानमरीचभक्षणादिषु लोकाः प्रयतन्ते । मृदुस्पर्शाय लोकाः पुष्टिकरावौषधाहारावुपयुञ्जते । लावण्यायाभ्यङ्गोद्वर्तनदुकूलालंकारानुपसेवन्ते । सौगन्ध्याय स्रगालेपने धारयन्ति । शास्त्रीयं गुणमाधातुं गङ्गास्नानसालग्रामतीर्थादिकं संपादयन्ति । दोषापनयनं च चिकित्सकोक्तैरौषधैर्मुखादिप्रक्षालनेन च लौकिकम्, शौचाचमनादिभिर्वैदिकमित्युभयविधम् । अस्याश्च देह-

वासनाया मालिन्यं वक्ष्यते। देहस्यात्मत्वं तावदप्रामाणिकत्वादशेषदुःखहेतुत्वाच्च मलिनम्। अस्मिंश्चार्थे पूर्वाचार्यैः सर्वैरपि पराक्रान्तम्। गुणाधानं च प्रायेण न पश्यामः। प्रसिद्धा एव गायका अध्यापकाश्च। प्रयतमाना अपि बहवो ध्वनिसौष्ठवं न लभन्ते। मृदुस्पर्शोऽङ्गपुष्टिश्च न नियतौ। लावण्यसौगन्ध्ये अपि दुकूलस्रगादिनिष्ठे न तु देहनिष्ठे। अत एव विष्णुपुराणेऽभिहितम्—

‘ मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।।
देहे चेत्प्रीतिमान्मूढो भविता नरकेऽपि सः ।।
स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ।
वैराग्यकारणं तस्य किमन्यदुपदिश्यते ।। ’ इति ।

शास्त्रीयं च गुणाधानं प्रबलेन शास्त्रान्तरेणापोह्यते, यथा ‘न हिंस्यात्सर्वा भूतानि’ इत्यस्य, ‘अग्नीषोमीयं पशुमालभेत’ इत्यनेनापवादस्तद्वत्। प्रबलतरं शास्त्रमेतदन्यशास्त्रापेक्षया।

‘ यस्यात्मबुद्धिः कुणपे त्रिधातुके
स्वधीः कलत्रादिषु भौम इज्यधीः ।
यस्तीर्थबुद्धिः सलिले न कर्हिचि-
ज्जनेष्वभिज्ञेषु स एव गोखरः ।। (भा.)
अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ।
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ।। ’ इत्यादि ।

यद्यप्यनेन शास्त्रेण दोषापनयनं प्रतिषिध्यते नतु गुणाधानम्, तथापि सति विरोधिनि प्रबलदोषे गुण आधातुमशक्य इत्यर्थाद् गुणाधानस्य प्रतिषेधः। अत्यन्तमालिन्यं चात्र मैत्रायणीय-

शाखायां श्रूयते–'भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणिताश्रुदूषिकादूषिते विण्मूत्रवातपित्तकफसंघाते दुर्गन्धे निःसारेऽस्मिञ्शरीरे किं कामोपभोगैः' (१. १. २) इति, 'शरीरमिदं मैथुनादेवोद्भूतं संविद्व्यपेतं निरय इव मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणावनद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्च मलैर्बहुभिः परिपूर्णं कोश इव वसुना' इति च। चिकित्सया च रोगशान्तिर्न नियता। शान्तोऽपि रोगः कदाचित्पुनरुदेति। नवभिश्छिद्रैर्निरन्तरं स्रवत्सु मलेषु रोमकूपैरसंख्यातैः स्विन्ने गात्रे को नाम खेदेन प्रक्षालयितुं शक्नुयात्? तदुक्तं पूर्वाचार्यैः–

'नवच्छिद्रयुता देहाः स्रवन्ति घटिका इव ।
बाह्यशौचैर्न शुध्यन्ति नान्तःशौचं च विद्यते ।।'

अतो देहवासना मलिना। तदेतन्मालिन्यमभिप्रेत्य वसिष्ठ आह–

'आपादमस्तकमहं मातापितृविनिर्मितः ।
इत्येको निश्चयो राम बन्धायासद्विलोकनात् ।।'

(ल. वा. २०. ४२)

'सा कालसूत्रपदवी सा महावीचिवागुरा ।
सासिपत्रवनश्रेणी या देहेऽहमिति स्थितिः ।।
सा त्याज्या सर्वयत्नेन सर्वनाशेऽप्युपस्थिते ।
स्प्रष्टव्या सा न भव्येन सश्वमांसेव पुल्कसी ।।'

(ल. वा. १८. १६, १७) इति ।

तदेतल्लोकशास्त्रदेहवासनात्रयमविवेकिनामुपादेयत्वेन प्रतिभास-

मानमपि विविदिषोर्वेदनोत्पत्तिविरोधित्वाद्विदुषो ज्ञानप्रतिष्ठा-विरोधित्वाच्च विवेकिभिर्हेयम् ।

अत एव स्मर्यते–

'लोकवासनया जन्तोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ।।'(सू. सं)इति ।

या तु दम्भदर्पाद्यासुरसंपद्रूपा मानसवासना, तस्या नरक-हेतुत्वान्मालिन्यमतिप्रसिद्धम् । अतः केनाप्युपायेन वासनाचतुष्ट-यस्य क्षयः संपादनीयः । यथा वासनायाः क्षयः संपादनीयस्तथा मनसोऽपि । न च तार्किकवन्नित्यद्रव्यमणुपरिमाणं मनो वैदिका अभ्युपगच्छन्ति येन मनोनाशो दुःसंपादः स्यात् । किं तर्हि साव-यवमनित्यं सर्वदा जतुसुवर्णादिवद्बहुविधपरिणामार्हं द्रव्यं मनः । तस्य लक्षणं प्रमाणं च वाजसनेयिनः समामनन्ति—'कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' (बृ. उ. १. ५. ३) इत्येतल्लक्षणम् । याः कामादि-वृत्तयः क्रमेणोत्पद्यमानाश्चाक्षुषप्रत्यक्षघटादिवत् साक्षिप्रत्यक्षे-णातिस्पष्टं भासन्ते, तदुपादानं मन इत्यर्थः । 'अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम्' (बृ. उ. १. ५. ३.) इति 'मनसा ह्येष पश्यति मनसा शृणोति' (बृ. उ. १. ५. ३) इत्येतत्प्रमाणम् । चक्षुःसंनिकृष्टः स्फीतालोकमध्यवर्ती घटः श्रोत्रसंनिकृष्ट उच्चैः पठितो वेदश्च यस्यानवधाने सति न प्रतीयते, अवधाने तु प्रतीयते, तादृशं सर्वविषयोपलब्धिसाधारणकरण-मन्वयव्यतिरेकाभ्यां प्रतीयत इत्यर्थः । 'तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति' (बृ. उ. १. ५. ३.) इत्येतदुदाहरणम् ।

यस्माच्च लक्षणप्रमाणाभ्यां सिद्धं मनस्तस्मात्तदेवमुदाहरणीयम्। पृष्ठभागेऽप्यन्येनोपस्पृष्टो देवदत्तो विशेषेण जानाति हस्तस्पर्शोऽयमङ्गुलिस्पर्शोऽयमिति। न हि तत्र चक्षुः प्रसरति, त्वगिन्द्रियं तु मार्दवकाठिन्यमात्रग्रहण उपक्षीणम्। तस्मान्मन एव विशेषज्ञानकारणं परिशिष्यते। तच्च मननान्मन इति चेतनाच्चित्तमिति चाभिधीयते। तच्च चित्तं सत्त्वरजस्तमोगुणात्मकम्, प्रकाशप्रवृत्तिमोहानां सत्त्वादिकार्याणां तत्र दर्शनात्। प्रकाशादीनां च गुणकार्यत्वं गुणातीतलक्षणेऽवगम्यते–

'प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव'।

(भ. गी. १४. २२)

इत्यभिधानात्। सांख्यशास्त्रेऽपि–'प्रकाशप्रवृत्तिमोहा नियमार्थाः' इत्युक्तम्। प्रकाशो नाम नात्र सितभास्वररूपं किं तु ज्ञानम्।

'सत्त्वात् संजायते ज्ञानं रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च॥'

(भ. गी. १४. १७)

इत्युक्तत्वात्। ज्ञानवत्सुखमपि सत्त्वकार्यम्। तदप्युक्तम्–

'सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत॥'

(भ. गी. १४. ९) इति।

समुद्रतरङ्गवन्निरन्तरं परिणममानेषु गुणेषु कदाचित्कश्चिदुद्भवति। इतरावभिभूयेते। तदुक्तम्–

'रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥'
(भ. गी. १४. १०) इति,

'बाध्यबाधकतां यान्ति कल्लोला इव सागरे ।'
(यो. वा.)इति च ।

तत्र तमस उद्भवे सत्यासुरसंपदुदेति । रजस उद्भवे सति लोकादिवासनास्तिस्रो भवन्ति । सत्त्वस्योद्भवे सति दैवी संपदुपजायते । एतदेवाभिप्रेत्योक्तम्–

'सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद् विवृद्धं सत्त्वमित्युत ॥'
(भ. गी. १४. ११) इति ।

यद्यप्यन्तःकरणं त्रिगुणात्मकं भासते, तथापि सत्त्वमेवास्य मुख्यमुपादानकारणम् । रजस्तमसी तूपष्टम्भके । उपादानसहकारिभूता अवयवा उपष्टम्भकाः । अत एव ज्ञानिनो योगाभ्यासेन रजस्तमसोरपनीतयोः सत्त्वमेव स्वरूपं परिशिष्यते । एतदेवाभिप्रेत्योक्तम्–

'ज्ञस्य चित्तमचित्तं स्याज्ज्ञचित्तं सत्त्वमुच्यते ।' इति ।

तच्च सत्त्वं चाञ्चल्यहेतुरजोगुणशून्यत्वादेकाग्रम् । भ्रान्तिकल्पितानात्मस्वरूपस्थूलपदार्थाकारहेतुतमोगुणशून्यत्वात्सूक्ष्मम् । तत आत्मदर्शनयोग्यम् । अत एव श्रुतिः–

'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।'
(कठ. उ. १. ३. १२) इति ।

न खलु वायुना दोधूयमानेन प्रदीपेन मणिमुक्तादिलक्षणानि निर्धारयितुं शक्यन्ते । नापि स्थूलेन खनित्रेण सूच्येव सूक्ष्मपट-स्यूतिः संभवति । तदेतदीदृशं सत्त्वमेवायोगिषु तमोगुणगर्भितेन रजोगुणेनोपस्पृष्टं बहुविधद्वैतसंकल्पेन चेतयमानं चित्तं भवति । तच्चित्तं तमोगुणाधिक्ये सत्यासुरीं संपदमुपचिन्वत्पीनं भवति । तथाह वसिष्ठः—

'अनात्मन्यात्मभावेन देहभावनया तथा ।
पुत्रदारैः कुटुम्बैश्च चेतो गच्छति पीनताम् ।।
अहंकारविकारेण ममतामललीलया ।
इदं ममेति भावेन चेतो गच्छति पीनताम् ।।
आधिव्याधिविलासेन समाश्वासेन संसृतौ ।
हेयादेयविभागेन चेतो गच्छति पीनताम् ।।
स्नेहेन धनलोभेन लाभेन मणियोषिताम् ।
आपातरमणीयेन चेतो गच्छति पीनताम् ।।
दुराशाक्षीरपानेन भोगानिलबलेन च ।
आस्थादानेन चारेण चित्ताहिर्याति पीनताम् ।।'
(ल. वा. २४. १७—२१) इति ।

आस्था नाम प्रपञ्चे सत्यत्वबुद्धिः, तस्या आदानमङ्गीकारः, स एव चारो गमनागमनक्रिया तेनेति । तदेवं विनाशनीययो-र्वासनामनसोः स्वरूपं निरूपितम् ।

अथ वासनाक्षयमनोनाशौ क्रमेण निरूप्येते । तत्र वासनाक्षयप्रकारमाह वसिष्ठः—

‘ बन्धो हि वासनाबन्धो मोक्षः स्याद् वासनाक्षयः ।
वासनास्त्वं परित्यज्य मोक्षार्थित्वमपि त्यज ।।
मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः ।
मैत्र्यादिभावनानाम्नीर्गृहाणामलवासनाः ।।
ता अप्यन्तः परित्यज्य ताभिर्व्यवहरन्नपि ।
अन्तः शान्ततमस्नेहो भव चिन्मात्रवासनः ।।
तामप्यन्तः परित्यज्य मनोबुद्धिसमन्विताम् ।
शेषे स्थिरसमासीनो येन त्यजसि तत्त्यज ।। ’

(ल. वा. १८. २०–२३) इति ।

अत्र मानसवासनाशब्देन पूर्वोक्तास्तिस्रो लोकशास्त्रदेहवासना विवक्षिताः । विषयवासनाशब्देन दम्भदर्पाद्यासुरसंपद्विवक्षिता । मृदुतीव्रत्वे तद्विवक्षाभेदकारणे । यद्वा शब्दस्पर्शरूपरसगन्धा विषयाः, तेषां काम्यमानत्वदशाजन्यः संस्कारो मानसवासना । भुज्यमानत्वदशाजन्यः संस्कारो विषयवासना । अस्मिन्पक्षे पूर्वोक्तानां चतसृणामनयोरेवान्तर्भावः, अन्तर्बाह्यव्यतिरेकेण वासनान्तरासंभवात् । ननु वासनायाः परित्यागः कथं घटते? न हि तासां मूर्तिरस्ति येन संमार्जनीसमूहितधूलितृणवद्धस्तेनोद्धृत्य बहिस्त्यक्ष्यामः । मैवम्; उपवासजागरणवत्तदुपपत्तेः । स्वभावप्राप्तयोर्भुजिक्रियानिद्रयोरमूर्तत्वेऽपि तत्परित्यागरूपे उपवासजागरणे सर्वैरप्यनुष्ठीयेते; तद्वदत्राप्यस्तु । ‘ अद्य स्थित्वा निराहारम ’ इत्यादिमन्त्रेण संकल्पं कृत्वा सावधानत्वेनावस्थानं तत्र त्याग इति चेत्, अत्रापि न तद्दण्डनिवारितम्, प्रैषमन्त्रेण संकल्प्याप्रमत्तत्वेनावस्थातुं शक्यत्वात् । वैदिकमन्त्रानधिकारिणां तु भाषया संकल्पोऽस्तु । यदि तत्र शाकसूपौदनादिसंनिधित्यागस्तर्ह्यत्रापि

स्रक्चन्दनवनितासंनिधिपरित्यागोऽस्तु । अथ तत्र बुभुक्षानिद्रालस्यादिविस्मारकैः पुराणश्रवणदेवपूजानृत्यगीतवादित्रादिभिश्चित्तमुपलाल्येत, तर्ह्यत्रापि मैत्र्यादिभिस्तदुपलालयेत् । मैत्र्यादयश्च पतञ्जलिना सूत्रिताः—'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' (१. ३३) इति। चित्तं हि रागद्वेषपुण्यपापैः कलुषीक्रियते। रागद्वेषौ च पतञ्जलिः सूत्रयामास—'सुखानुशयी रागः' (२. ७), 'दुःखानुशयी द्वेषः (२. ८)' इति । स्वेनानुभूयमानं सुखमनुशेते कश्चिद्धीवृत्तिविशेषः 'सुखजातीयं मे सर्वं भूयात्' इति । तच्च दृष्टादृष्टसामग्र्यभावान्न संपादयितुं शक्यम् । अतः स रागश्चित्तं कलुषीकरोति । यदा सुखिष्वयं मैत्रीं भावयेत् 'सर्वेऽप्येते सुखिनो मदीयाः' इति, तदा तत्सुखं स्वकीयमेव संपन्नमिति भावयतस्तत्र रागो निवर्तते, यथा स्वस्य राज्याभावेऽपि पुत्रादिराज्यमेव स्वकीयं राज्यं तद्वत् । निवृत्ते च रागे वर्षास्वतीतासु शरत्सरिदिव चित्तं प्रसीदति । तथा दुःखमनुशेते कश्चित्प्रत्ययः, 'ईदृशं सर्वं दुःखं सर्वदा मे मा भूत्' इति । तच्च रोगशत्रुव्याघ्रादिषु सत्सु न निवारयितुं शक्यम् । न च सर्वे दुःखहेतवो हन्तुं शक्यन्ते । ततः स द्वेषः सदा हृदयं दहति । यदा स्वस्येव परेषां सर्वेषां प्रतिकूलं दुःखं मा भूदित्यनेन प्रकारेण करुणां दुःखिषु प्राणिषु भावयेत् तदा वैर्यादिद्वेषनिवृत्तौ चित्तं प्रसीदति । अत एव स्मर्यते—

'प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन भूतानां दयां कुर्वन्ति साधवः ।।' इति ।

तत्प्रकारं च महान्तो दर्शयन्ति—

'सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखमाप्नुयात् ।।'
इति ।

तथा हि प्राणिनः स्वभावत एव पुण्यं नानुतिष्ठन्ति, पापं त्वनुतिष्ठन्ति ।

तदाहुः—

'पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः ।
न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः ।।' इति ।

ते च पुण्यपापे पश्चात्तापं जनयतः । स च तापः श्रुत्यानूद्यते— 'किमहं साधु नाकरवम्, किमहं पापमकरवम्' (तै. उ. २. ९) इति । यद्यसौ पुण्यपुरुषेषु मुदितां भावयेत् तदा तद्वासनया स्वयमेवाप्रमत्तः पुण्येषु प्रवर्तेत । तथा पापिषूपेक्षां भावयन् स्वयमपि पापान्निवर्तेत । अतः पश्चात्तापस्याभावेन चित्तं प्रसीदति। सुखिषु मैत्रीं भावयतो न केवलं रागनिवृत्तिः किं त्वसूयेर्ष्यादयोऽपि निवर्तन्ते । गुणेषु दोषाविष्करणमसूया, परगुणानामसहनमीर्ष्या । यदा मैत्रीवशात्परकीयं सुखं स्वकीयमेव संपद्यते, तदा परगुणेषु कथमसूयादिकं संभवेत्? एवं दोषान्तरनिवृत्तिरपि यथायोगमुन्नेया । दुःखिषु करुणां भावयतः शत्रुवधादिकरो द्वेषो यदा निवर्तते, तदा दुःखित्वप्रतियोगिकस्वसुखित्वप्रयुक्तो दर्पोऽपि निवर्तते । स च दर्प आसुरसंपद्यहंकारप्रस्तावे पूर्वं निरूपितः—

'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ।।'
'आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।'
(भ. गी. १६. १४. १५) इत्यादि ।

ननु पुण्यात्मसु मुदितां भावयतः पुण्यप्रवृत्तिः फलत्वेनोक्ता, सा च योगिनो न युक्ता, मलिनायां शास्त्रवासनायां पुण्यमन्तर्भाव्य पूर्वमुदाहृतत्वात् । मैवम्, पुनर्जन्मकारणस्य काम्येष्टापूर्तादेस्तत्र मलिनत्वेनोदाहरणात् । इह तु योगाभ्यासजन्यमशुक्लाकृष्णत्वेन जन्मानापादकं पुण्यं विवक्षितम् । अशुक्लाकृष्णत्वं पतञ्जलिः सूत्रयामास—'कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्' (४. ७) इति काम्यं कर्म विहितत्वाच्छुक्लम्, निषिद्धं कृष्णम्, मिश्रं शुक्लकृष्णम् । तदेतत्त्रयमितरेषामयोगिनां संपद्यते । तच्च त्रिविधं जन्म प्रयच्छति । तदाहुर्विश्वरूपाचार्याः—

'शुभैः प्राप्नोति देवत्वं निषिद्धैर्नारकीं गतिम् ।
उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः ।।'
(नै. १. ४१) इति ।

ननु योगस्यानिषिद्धत्वादकृष्णत्वेऽपि विहितत्वाच्छुक्लत्वमिति चेन्मैवम्, अकाम्यत्वाभिप्रायेणाशुक्लत्वाभिधानात् । अतोऽशुक्लकृष्णे पुण्ये प्रवृत्तिर्योगिनोऽपेक्षिता । ननु योगिनोऽप्यनेन न्यायेन यथोचितं पुण्यात्मसु मुदितां भावयित्वा पुण्येष्वेव प्रवर्तेरन्निति चेत्प्रवर्तन्तां नाम, ये मैत्र्यादिभिश्चित्तं प्रसादयन्ति तेषामेव योगित्वात् । मैत्र्यादिचतुष्टयमुपलक्षणम् । तेन 'अभयं सत्त्वसंशुद्धिः' इत्यादिदैवसंपत् 'अमानित्वमदम्भित्वम्' इत्यादिज्ञानसाधनानि जीवन्मुक्तस्थितप्रज्ञादिवचनोक्ता धर्माश्चोपलक्ष्यन्ते, सर्वेषामेतेषां शुभवासनारूपत्वेन मलिनवासनानिवर्तकत्वात् । ननु सन्त्यनन्ताः शुभवासनाः, न चैकेन ताः सर्वा अभ्यसितुं शक्यन्ते; निरर्थकश्च तदभ्यासप्रयास इति चेन्न; तन्निवर्त्यानामनन्तानां मलिनवासनानामेकस्य मनस्यसंभवात् ।

न ह्यायुर्वेदोक्तानि सर्वाण्यौषधान्येकेन सेवितुं शक्यन्ते । नापि तन्निवर्त्याः सर्वे रोगा एकस्य देहे संभवन्ति । एवं तर्हि स्वचित्तं प्रथमतः परीक्ष्य तत्र यदा यावत्यो मलिनवासनास्तदा तावतीर्विरोधिनीः शुभवासना अभ्यस्येत् । यथा पुत्रमित्रकलत्रादिभिः पीड्यमानस्ततो विरक्तस्तन्निवर्तकं पारिव्राज्यं गृह्णाति, तथा विद्यामदधनमदकुलाचारमदादिमलिनवासनाभिः पीड्यमानस्तद्विरोधिनं विवेकमभ्यस्येत् । स च विवेको जनकेन दर्शितः—

'अद्य ये महतां मूर्ध्नि ते दिनैर्निपतन्त्यधः ।
हन्त चित्त महत्तायाः कैषा विश्वस्तता तव ॥'
(ल. वा. १९. ३९.)

'क्व धनानि महीपानां ब्रह्मणः क्व जगन्ति वा ।
प्राक्तनानि प्रयातानि केयं विश्वस्तता तव ॥
कोटयो ब्रह्मणां याता गताः स्वर्गपरम्पराः ।
प्रयाताः पांसुवद् भूपाः का धृतिर्मम जीविते ॥'
(ल. वा. १९. ४१, ४२)

'येषां निमेषणोन्मेषौ जगतः प्रलयोदयौ ।
तादृशाः पुरुषा नष्टा मादृशां गणनैव का ॥'
(ल. वा. १९. ४९) इति ।

नन्वयमपि विवेकस्तत्त्वज्ञानोदयात्प्राचीनः, नित्यानित्यवस्तुविवेकादिसाधनव्यतिरेकेण ब्रह्मज्ञानासंभवात्, इह तूत्पन्नब्रह्मसाक्षात्कारस्य जीवन्मुक्तये वासनाक्षयादिसाधनं वक्तुमुपक्रान्तम्; अतः किमिदमकाण्डे ताण्डवमिति चेत् । नायं दोषः । साधनचतुष्टयसंपन्नस्य पश्चाद् ब्रह्मज्ञानमित्येष सर्वपुरुषसाधारणः

प्रौढो राजमार्गः। जनकस्य तु पूर्वपुण्यपुञ्जपरिपाकेणाकाशफलपातवदकस्मात्सिद्धगीताश्रवणमात्रेण तत्त्वज्ञानमुत्पन्नम्। ततश्च चित्तविश्रान्तये विवेकोऽयं क्रियत इति काण्ड एवेदमुचितं ताण्डवम्। नन्वेवमप्यस्य विवेकस्य ज्ञानसमनन्तरभावित्वेन मलिनवासनानुवृत्त्यभावाच्छुद्धवासनाभ्यासो नापेक्षित इति चेन्न, जनकस्य तदनुवृत्त्यभावेऽपि याज्ञवल्क्यभगीरथादेस्तदनुवृत्तिदर्शनात्। अस्ति हि याज्ञवल्क्यस्य तत्प्रतिवादिनामुषस्तकहोलादीनां च भूयान्विद्यामदः, तैः सर्वैरपि विजिगीषुकथायां प्रवृत्तत्वात्। ननु तेषां विद्यान्तरमेवास्ति न तु ब्रह्मविद्येति चेन्न, कथागतयोः प्रश्नोत्तरयोर्ब्रह्मविषयत्वात्। ननु ब्रह्मविषयत्वेऽपि तेषामापाततो ज्ञानमेव न तु सम्यग्वेदनमिति चेन्न, तथा सत्यस्माकमपि तदीयवाक्यैरुत्पन्नाया ब्रह्मविद्याया असम्यक्त्वप्रसङ्गात्। ननु सम्यक्त्वेऽपि परोक्षज्ञानमेवेति चेन्न, 'यत्साक्षादपरोक्षाद् ब्रह्म' इति मुख्यापरोक्षविषयतयैव विशेषतः प्रश्नोपलम्भात्। नन्वात्मज्ञानिनो विद्यामद आचार्यैर्नाभ्युपगम्यते; तथा चोपदेशसाहस्र्यामभिहितम्—

'ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः।'

(१२. १३) इति।

नैष्कर्म्यसिद्धावपि—

'न चाध्यात्माभिमानोऽपि विदुषोऽस्त्यासुरत्वतः।
विदुषोऽप्यासुरश्चेत्स्यान्निष्फलं ब्रह्मदर्शनम्॥' इति।

इति चेत्, नायं दोषः। जीवन्मुक्तिपर्यन्तस्य तत्त्वज्ञानस्य तत्र विवक्षितत्वात्। न खलु वयमपि जीवन्मुक्तानां विद्यामदमभ्युपगच्छामः। ननु विजिगीषोरात्मबोध एव नास्ति,

'रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ।
कुतः शाद्वलता तस्य यस्याग्निः कोटरे तरोः ।।
(नै. ४. ६७)

इत्याचार्यैरभ्युपगमादिति चेन्न ।

'रागादयः सन्तु कामं न तद्भावोऽपराध्यति ।
उत्खातदंष्ट्रोरगवदविद्या किं करिष्यति ।।'
(बृ. वा. ४. १७४६)

इत्यत्र तैरेव रागाद्यभ्युपगमात् । न चात्र परस्परव्याहतिः, स्थितप्रज्ञे ज्ञानिमात्रे च वचनद्वयस्य व्यवस्थापनोपयुक्तत्वात् । ननु ज्ञानिनो रागाद्यभ्युपगमे धर्माधर्मद्वारेण जन्मान्तरप्रसङ्ग इति चेन्मैवम्, अदग्धबीजवदविद्यापूर्वककामादेरेव मुख्यरागादित्वेन पुनर्जन्महेतुत्वात् । ज्ञानिनस्तु दग्धबीजवदाभासमात्रा एव रागादयः । एतदेवाभिप्रेत्योक्तम्–

'उत्पद्यमाना रागाद्या विवेकज्ञानवह्निना ।
तदा तदैव दह्यन्ते कुतस्तेषां प्ररोहणम् ।।' इति ।
(पञ्च. ७)

तर्हि स्थितप्रज्ञस्यापि ते सन्त्विति चेन्न, तत्काले मुख्यवदेवाभासमानानां बाधकत्वात्; रज्जुसर्पोऽपि मुख्यसर्पवदेव तदानीं भीषयन्नुपलभ्यते, तद्वत्। तर्ह्याभासत्वानुसंधानानुवृत्तौ न कोऽपि बाध इति चेच्चिरं जीवतु भवान् । इयमेवास्मदभिमता जीवन्मुक्तिः । याज्ञवल्क्यस्तु विजिगीषुदशायां न हीदृशः, चित्तविश्रान्तये विद्वत्संन्यासस्य तेन करिष्यमाणत्वात् । न केवलमस्य विजिगीषा किं तु धनतृष्णापि महती जाता, यतो, बहूनां ब्रह्मविदां

पुरतः स्थापितं सालंकारं गोसहस्रमपहृत्य स्वयमेवेदमाह—'नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्मः' (बृ. उ. ३. १. २) इति । इतरान् ब्रह्मविदोऽवज्ञातुमियं काचिद्वचोभङ्गीति चेत् । अयमपि तर्ह्यपरो दोषः । इतरे च ब्रह्मविदः स्वकीयं धनमनेनापहृतमिति मत्वा चुक्रुधुः । अयं च क्रोधपरवशः शाकल्यं शापेन मारयामास । न चास्य ब्रह्मघ्नो मोक्षाभावः शङ्कनीयः । यतः कौषीतकिनः समामनन्ति—'नास्य केन च कर्मणा लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया' (३. १) इति । शेषोऽपि स्वकृतायामार्यापञ्चाशीत्यामिदमाह—

'हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन्न पुण्यैर्न च पापैः स्पृश्यते विमलः ॥ ७७ ॥'
इति ।

तस्मात् किं बहुना, ब्रह्मविदां याज्ञवल्क्यादीनामस्त्येव मलिनवासनानुवृत्तिः, भगीरथस्तु तत्त्वं विदित्वापि राज्यं पालयन्मलिनवासनाभिश्चित्तविश्रान्त्यभावे सति सर्वं परित्यज्य पश्चाद्विश्रान्तवानिति वसिष्ठेनोपाख्यायते । अतः स्वकीयं वर्तमानं मलिनवासनादोषं परकीयदोषवत्सम्यगुत्प्रेक्ष्य तत्प्रतीकारमभ्यस्येत् । अनेनैवाभिप्रायेण स्मर्यते—

'यथा सुनिपुणः सम्यक्परदोषेक्षणे रतः ।
तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् ॥'
इति ।

नन्वादौ तावद्विद्यामदस्य कः प्रतीकार इति चेत् । किं स्वनिष्ठस्य परविषयस्य मदस्य, किं वा स्वविषयस्य परनिष्ठस्य ?

आद्ये भङ्गोऽवश्यं क्वचिद्भविष्यतीति निरन्तरं भावयेत् । तद्यथा श्वेतकेतुर्विद्यया मत्तः प्रवाहणस्य राज्ञः सभां गत्वा तेन पञ्चाग्नि-विद्यायां पृष्टायां स्वयमजानानो निरुत्तरो राज्ञा बहुधा भर्त्सितः पितुः समीपमागत्य स्वनिर्वेदमुदाजहार । पिता तु निर्मदस्तमेव राजानमनुसृत्य तां विद्यां लेभे । दृप्तबालाकिश्चाजातशत्रुणा राज्ञा भर्त्सितो दर्पं संत्यज्य राजानमुपससाद । उषस्तकहोलादयश्च मदेन कथां कृत्वा पराजिताः । यदा स्वविषयः परनिष्ठो मदः प्रवर्तेत तदा मत्तः स परो मां निन्दतु, अवमन्यतां वा सर्वथापि न मे हानिरिति भावयेत् । तथा हि—

'आत्मानं यदि निन्दन्ति निन्दन्ति स्वयमेव हि ।
शरीरं यदि निन्दन्ति सहायास्ते मता मम ।।
निन्दावमानावत्यन्तं भूषणं यस्य योगिनः ।
धीविक्षेपः कथं तस्य वाचाटैः क्रियतामिह ।।' इति ।

नैष्कर्म्यसिद्धौ—

'वर्चस्के संपरित्यक्ते दोषतश्चावधारिते ।
यदि दोषं वदेत् तस्मै किं तत्रोच्चरितुर्भवेत् ।।
(२. १६)

तद्वत्स्थूले तथा सूक्ष्मे देहे त्यक्ते विवेकतः ।
यदि दोषं वदेत् ताभ्यां किं तत्र विदुषो भवेत् ।।
(२. १७)

शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।
अहंकारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ।।' इति ।

निन्दाया भूषणत्वं च ज्ञानाङ्कुशे दर्शितम्—

'मन्निन्दया यदि जनः परितोषमेति
नन्वप्रयत्नसुलभोऽयमनुग्रहो मे ।
श्रेयोर्थिनो हि पुरुषाः परतुष्टिहेतो-
र्दुःखार्जितान्यपि धनानि परित्यजन्ति ।।
सततसुलभदैन्ये निःसुखे जीवलोके
यदि मम परिवादात् प्रीतिमाप्नोति कश्चित् ।
परिवदतु यथेष्टं मत्समक्षं तिरो वा
जगति हि बहुदुःखे दुर्लभः प्रीतियोगः ।।' इति ।

अवमानस्य भूषणत्वं स्मर्यते—

'तथा चरेत वै योगी सतां धर्ममदूषयन् ।
जना यथावमन्येरन् गच्छेयुर्नैव संगतिम् ।।' इति ।

याज्ञवल्क्योषस्तादीनां यौ स्वनिष्ठपरनिष्ठौ विद्यामदौ तयोर्यथा विवेकेन प्रतीकारस्तथा धनाभिलाषक्रोधयोरप्यवगन्तव्यः ।

'अर्थानामर्जने क्लेशस्तथैव परिपालने ।
नाशे दुःखं व्यये दुःखं धिगर्थान्क्लेशकारिणः ।।'

इति धनविषये विवेकः ।।

क्रोधोऽपि द्विविधः—स्वनिष्ठः परविषयः, परनिष्ठः स्वविषयश्चेति । तत्र स्वनिष्ठं परविषयं प्रत्येवमुक्तम्—

'अपकारिणि कोपश्चेत् कोपः कोपे कथं न ते ।
धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ।।
फलार्थिनो धर्मयशोर्थनाशनः
स चेदपार्थः स्वशरीरतापनः ।

न चेह नामुत्र हिताय यः सतां
मनांसि कोपः समुपाश्रयेत् कथम्' ।। इति ।

स्वविषयं परनिष्ठं प्रत्येवमीरितम्–

'न मेऽपराधः किमकारणे नृणां
मदभ्यसूयेत्यपि नैव चिन्तयेत् ।
न यत्कृता प्राग्भवबन्धनिष्कृति-
स्ततोऽपराधः परमोऽनुचिन्त्यताम् ।।
नमोऽस्तु कोपदेवाय स्वाश्रयज्वालिने भृशम् ।
कोप्यस्य मम वैराग्यदायिने दोषबोधिने ।।' इति ।

धनाभिलाषक्रोधवद्योषित्पुत्राभिलाषावपि विवेकेन निवर्तनीयौ । तत्र योषिद्विवेको वसिष्ठेन दर्शितः–

'मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।
स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनम् ।।
त्वङ्मांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोचने ।
समालोकय रम्यं चेत् किं मुधा परिमुह्यसि ।।
मेरुश्रृङ्गतटोल्लासिगङ्गाजलरयोपमा ।
दृष्टा यस्मिन् स्तने मुक्ताहारस्योल्लासशालिता ।।
श्मशानेषु दिगन्तेषु स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ।।
केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरान् ।।
ज्वलतामतिदूरेऽपि सरसा अपि नीरसाः ।
स्त्रियो हि नरकाग्नीनामिन्धनं चारु दारुणम् ।।

कामनाम्ना किरातेन विकीर्णा मुग्धचेतसाम् ।
नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ।।
जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।
पुंसां दुर्वासनारज्जौ नारी बडिशपिण्डिका ।।
सर्वेषां दोषरत्नानां सुसमुद्गिकयानया ।
दुःखश्रृङ्खलया नित्यमलमस्तु मम स्त्रिया ।।
इतो मांसमितो रक्तमितोऽस्थीनीति वासरैः ।
ब्रह्मन्कतिपयैरेव याति स्त्री विशरारुताम् ।।
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः ।
स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ।। '
(ल. वा. २. ९०–१००) इति ।

पुत्रविवेको ब्रह्मानन्दे दर्शितः–

'अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ।
लब्धोऽपि गर्भपातेन प्रसवेन च बाधते ।। ६५ ।।
जातस्य ग्रहरोगादिः कुमारस्य च मूर्खता ।
उपनीते त्वविद्यत्वमनुद्वाहश्च पण्डिते ।। ६६ ।।
यूनश्च परदारादिर्दारिद्र्यं च कुटुम्बिनः ।
पित्रोर्दुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ।। ६७ ।। '
इति ।

यथा विद्याधनक्रोधयोषित्पुत्रविषयाणां मलिनवासनानां विवेकेन प्रतीकारस्तथान्यासामपि वासनानां यथायोगं शास्त्रैः स्वयुक्त्या च दोषं विविच्य प्रतीकारं कुर्यात् । कृते च प्रतीकारे जीवन्मुक्ति-लक्षणं परमं पदं लभ्यते । तदाह वसिष्ठः–

'वासनानां परित्यागे यदि यत्नं करोष्यलम् ।
तत्ते शिथिलतां यान्ति सर्वाधिव्याधयः क्षणात् ॥
पौरुषेण प्रयत्नेन बलात्संत्यज्य वासनाः ।
स्थितिं वध्नासि चेत्तर्हि पदमासादयस्यलम् ॥' इति ।

नन्वत्र पौरुषः प्रयत्नो नाम पूर्वोक्तो विषयदोषविवेकः । स च पुनः पुनः क्रियमाणोऽपि प्रबलेन्द्रियव्यवहारेणाभिभूयते । तदुक्तं भगवता–

'यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥'
(भ. गी. २. ६०)

'इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥'
(भ. गी. २. ६७) इति ।

एवं तर्ह्युत्पन्नविवेकरक्षार्थमिन्द्रियाणि निरोद्धव्यानि । तदपि तत्रैवोत्तरश्लोकाभ्यां दर्शितम्–

'तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥'
(भ. गी. २. ६१)

'तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥'
(भ. गी. २. ६८) इति ।

स्मृत्यन्तरेऽपि–

'न पाणिपादचपलो न नेत्रचपलो यतिः ।
न च वाक्चपलश्चैवमिति शिष्टस्य लक्षणम् ।।' इति ।

एतदेवान्यत्र संग्रहविवरणाभ्यां स्पष्टीकृतम्—

'अजिह्वः षण्डकः पङ्गुरन्धो बधिर एव च ।
मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ।।
इदमिष्टमिदं नेति योऽश्नन्नपि न सज्जते ।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ।।
अद्य जातां यथा नारीं तथा षोडशवार्षिकीम् ।
शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्डकः ।।
भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च ।
योजनान्न परं याति सर्वथा पङ्गुरेव सः ।।
तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम् ।
चतुर्युगां भुवं त्यक्त्वा परिव्राट् सोऽन्ध उच्यते ।।
हितं मितं मनोरम्यं वचः शोकापहं च यत् ।
श्रुत्वा यो न शृणोतीव बधिरः स प्रकीर्तितः ।।
संनिधौ विषयाणां च समर्थोऽविकलेन्द्रियः ।
सुप्तवद्वर्तते नित्यं भिक्षुर्मुग्धः स उच्यते ।।
न निन्दां न स्तुतिं कुर्यान्न कंचिन्मर्मणि स्पृशेत् ।
नातिवादी भवेत् तद्वत् सर्वत्रैव समो भवेत् ।।
न संभाषेत् स्त्रियं कांचित् पूर्वदृष्टां न च स्मरेत् ।
कथां च वर्जयेत्तस्या न पश्येल्लिखितामपि ।।' इति ।

यथा कश्चिद् व्रती नक्तैकभुक्तोपवासमौनादिव्रतं संकल्प्य सावधानो भ्रंशमकृत्वा सम्यक्पालयति, तथैवाजिह्वत्वादिव्रते स्थितः साव-

धानो विवेकं पालयेत्। तदेवं विवेकेन्द्रियनिरोधाभ्यां दीर्घकाल-नैरन्तर्यसत्कारसेविताभ्यां मैत्र्यादिभावनासु प्रतिष्ठितास्वासुर-संपद्रूपा मलिनवासनाः क्षीयन्ते। ततो निःश्वासोच्छ्वासवन्नि-मेषोन्मेषवच्च पुरुषप्रयत्नमन्तरेण प्रवर्तमानाभिर्मैत्र्यादिवासना-भिर्लोके व्यवहरन्नपि तदीयसाकल्यवैकल्यानुसंधानं चित्ते परित्यज्य निद्रातन्द्रामनोराज्यादिरूपाः समस्तचेष्टाः प्रयत्नेन शान्ताः कृत्वा चिन्मात्रवासनामभ्यस्येत्। स्वतस्तावदिदं जगच्चिज्जडोभयात्मकं भासते; यद्यपि शब्दस्पर्शादिजडवस्तुभासनायैवेन्द्रियाणि सृष्टानि 'पराञ्चि खानि व्यतृणत् स्वयंभूः' (कठ. उ. २. १. १) इति श्रुतेः, तथापि चैतन्यस्योपादानतया वर्जयितुमशक्यत्वाच्चैतन्य-पूर्वकमेव जडं जगद् भासते; 'तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' (कठ. उ. २. २. १५) इति श्रुतेः; तथा सति पश्चाद् भासमानस्य जडस्य प्रथमतो भासमानमेव चैतन्यं वास्तवं रूपमिति निश्चित्य जडमुपेक्ष्य चिन्मात्रं चित्ते वासयेत्। एतच्च बलिशुक्रयोः प्रश्नोत्तराभ्यां विस्पष्टमवगम्यते—

'किमिहास्तीह किमात्रमिदं किमयमेव च।
कस्त्वं कोऽहं क एते वा लोका इति वदाशु मे॥'
(ल. वा. २१. ५०)

'चिदिहास्तीह चिन्मात्रमिदं चिन्मयमेव च।
चित्त्वं चिदहमेते च लोकाश्चिदिति संग्रहः॥'
(ल. वा. २१. ५२) इति।

यथा सुवर्णकामः कटकं क्रीणन्नपि वलयाकारस्य गुण-दोषावुपेक्ष्य गुरुत्ववर्णयोरेव मनः प्रणिधित्सति, तथा चिन्मात्रे

मन: प्रणिधातव्यम् । यावता कालेन जडं सर्वथैवोपेक्ष्य चिन्मात्र मनस: प्रवृत्तिर्नि:श्वासादिवत्स्वाभाविकी संपद्यते, तावन्तं कालं चिन्मात्रवासनायां प्रयतेत । नन्वादावेव चिन्मात्रवासनास्तु, तयैव मलिनवासनानिवृत्ते:; किमनेनान्तर्गडुना मैत्र्याद्यभ्यासेनेति चेन्न, चिद्वासनाया अप्रतिष्ठिततत्वप्रसङ्गात् । यथा कुट्टिमदार्ढ्य-व्यतिरेकेण क्रियमाणमपि स्तम्भकुड्यात्मकं गृहं न प्रतितिष्ठति, यथा वा विरेचनेन प्रबलदोषमनि:सार्य सेवितमप्यौषधं नारोग्यकरं तद्वत् । ननु 'तामप्यथ परित्यजेत्' इति चिन्मात्रवासनाया अपि परित्यागोऽवगम्यते; तदप्ययुक्तम्, चिन्मात्रं परित्यज्यान्यस्य कस्यचिदुपादेयस्याभावात् । नायं दोष: । द्विविधा चिन्मात्र-वासना—मनोबुद्धिसमन्विता तद्रहिता चेति । करणं मन:, कर्तृत्वोपाधिर्बुद्धि: । तथा च सत्यप्रमत्तोऽहमेकाग्रेण मनसा चिन्मात्रं भावयिष्यामीत्येतादृशेन कर्तृकरणानुसंधानेन समन्विता प्राथमिकी या चिन्मात्रवासना ध्यानशब्दाभिधेया तां परित्यजेत् । या त्वभ्यासपाटवेन कर्तृत्वाद्यनुसंधानव्यवधानरहिता समाधि-शब्दाभिधेया तामुपाददीत । ध्यानसमाध्योस्तु लक्षणं पतञ्जलि: सूत्रयामास—'तत्र प्रत्ययैकतानता ध्यानम्' (३. २.) 'तदे-वार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधि:' (३. ३.) इति । तादृशे समाधौ दीर्घकालनैरन्तर्यसत्कारै: सेविते स्थैर्यं लब्ध्वा पश्चात् कर्तृकरणानुसंधानपरित्यागार्थो य: प्रयत्नस्तमपि परित्यजेत् । नन्वेवं सति तत्त्यागप्रयत्नोऽपि परित्याज्य इत्यन-वस्था स्यात् । मैवम् । कतकरजोन्यायेन स्वपरनिवर्तकत्वात् । यथा कलुषिते जले प्रक्षिप्तं कतकरज इतररजसा सह स्वात्मान-मपि निवर्तयति तथा त्यागार्थ: प्रयत्न: कर्तृकरणानुसंधानं निवर्त-

यन्स्वात्मानमपि निवर्तयिष्यति । निवृत्ते च तस्मिन् मलिनवासनावच्छुद्धवासनानामपि क्षीणत्वान्निर्वासनं मनोऽवतिष्ठते । एतदेवाभिप्रेत्य वसिष्ठ आह–

'तस्माद्वासनया बद्धं मुक्तं निर्वासनं मनः ।
राम निर्वासनीभावमाहराशु विवेकतः ॥
सम्यगालोचनात् सत्याद् वासना प्रविलीयते ।
वासनाविलये चेतः शाम्यत्यस्नेहदीपवत् ॥'
(ल. वा. १६. ४५, ४६) इति,

'यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥'
(ल. वा. ५. ९२) इति च ।

'सुषुप्तवत्प्रशमितभाववृत्तिना
स्थितं सदा जाग्रति यस्य चेतसा ।
कलान्वितो विधुरिव यः सदा बुधै-
र्निषेव्यते मुक्त इतीह स स्मृतः ॥' इति च ।
'हृदयात् संपरित्यज्य सर्वमेव महामतिः ।
यस्तिष्ठति गतव्यग्रः स मुक्तः परमेश्वरः ॥
समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदयेनास्तसर्वाशो मुक्त एवोत्तमाशयः ॥
नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ।
न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥
विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः ।
संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥' इति च ।

न च निर्वासनमनस्कस्य जीवनहेतुर्व्यवहारो लुप्येतेति शङ्कनीयम् । किं चक्षुरादिव्यवहारस्य लोपः, किं वा मानसव्यवहारस्य ? तत्राद्यमुद्दालको निराचष्टे–

'वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः ।
प्रवर्तते बहिः स्वार्थे वासना नात्र कारणम् ॥' इति ।

द्वितीयं वसिष्ठो निराचष्टे–

'अयत्नोपनतेष्वक्षि दिग्द्रव्येषु यथा पुनः ।
नीरागमेव पतति तद्वत् कार्येषु धीरधीः ॥' इति ।

तादृश्या धिया प्रारब्धभोगं स एवोपपादयति–

'परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ।
विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् ॥
अशङ्कितोपसंप्राप्ता ग्रामयात्रा यथाध्वगैः ।
प्रेक्ष्यते तद्वदेव ज्ञैर्भोगश्रीरवलोक्यते ॥'
(ल. वा. १५. १४, १५) इति ।

भोगकालेऽपि सवासनेभ्यो निर्वासनानां विशेषमाह–

'नापदि ग्लानिमायान्ति हेमपद्मं यथा निशि ।
नेहन्ते प्रकृतादन्यद्रमन्ते शिष्टवर्त्मनि ॥
(ल. वा. १८. ४२)

नित्यमापूर्णतामन्तरक्षुब्धामिन्दुसुन्दरीम् ।
आपद्यपि न मुञ्चन्ति शशिनः शीततामिव ॥
(ल. वा. १. ४३)

अब्धिवद्धृतमर्यादा भवन्ति वितताशयाः ।
नियतिं न विमुञ्चन्ति महान्तो भास्करा इव ।। '
(ल. वा. १. ४५) इति ।

जनकस्यापि समाधिव्युत्थितस्येदृशमेवाचरणं पठ्यते–

'तूष्णीमथ चिरं स्थित्वा जनको जनजीवितम् ।
व्युत्थितश्चिन्तयामास मनसा शमशालिना ।।
किमुपादेयमस्तीह यत्नात् संसाधयामि किम् ।
स्वतः स्थितस्य शुद्धस्य चितः का मेऽस्ति कल्पना ।।
नाभिवाञ्छाम्यसंप्राप्तं संप्राप्तं न त्यजाम्यहम् ।
स्वस्थ आत्मनि तिष्ठामि यन्ममास्ति तदस्तु मे ।।
इति संचिन्त्य जनको यथाप्राप्तक्रियामसौ ।
असक्तः कर्तुमुत्तस्थौ दिनं दिनपतिर्यथा ।।
भविष्यन्नानुसंधत्ते नातीतं चिन्तयत्यसौ ।
वर्तमाननिमेषं तु हसन्नेवानुवर्तते ।। '
(ल. वा. १६. ६०–४) इति ।

तदेवं यथोक्तेन वासनाक्षयेण यथोक्ता जीवन्मुक्तिर्भविष्यतीति सुस्थितम् ।।

**इति श्रीमद्विद्यारण्यप्रणीते जीवन्मुक्तिविवेके वासनाक्षयनिरूपणं नाम द्वितीयं प्रकरणम् ।। २ ।।**

———

## तृतीयं मनोनाशप्रकरणम् ।

अथ जीवन्मुक्तिसाधनं मनोनाशं निरूपयामः । यद्यप्यशेषवासनाक्षये सति, अर्थान्मनो नश्यत्येव; तथापि स्वातन्त्र्येण मनोनाशे सम्यगभ्यस्ते सति, वासनाक्षयो रक्षितो भवति । न चाजिह्वत्वषण्डत्वाद्यभ्यासेनैव तद्रक्षा सिद्धेति वाच्यम्, नष्टे मनस्यजिह्वत्वादीनामर्थसिद्धत्वेनाभ्यासाभावात् । ननु मनोनाशाभ्यासप्रयासस्तत्राप्यस्तीति चेदस्तु नाम, तस्यावश्यिकत्वात् । अन्तरेण मनोनाशमभ्यस्ता अप्यजिह्वत्वादयो न स्थिरा भवन्ति । अत एव मनसो नाशनीयत्वं जनक आह–

'सहस्राङ्कुरशाखात्मफलपल्लवशालिनः ।
अस्य संसारवृक्षस्य मनो मूलमिति स्थितम् ।।
संकल्पमेव तन्मन्ये संकल्पोपशमे न तत् ।
शोषयामि यथा शोषमेति संसारपादपः ।।
प्रबुद्धोऽस्मि प्रबुद्धोऽस्मि दृष्टश्चोरो मयात्मनः ।
मनोनामेह हन्म्येनं मनसास्मि चिरं हतः ।।'

(ल. वा. १९. ५३–५) इति ।

वसिष्ठोऽप्याह–

'अस्य संसारवृक्षस्य सर्वोपद्रवदायिनः ।
उपाय एक एवास्ति मनसः स्वस्य निग्रहः ।।

(ल. वा. १७. १)

मनसोऽभ्युदयो नाशो मनोनाशो महोदयः ।
ज्ञमनो नाशमभ्येति मनोऽज्ञस्य हि शृङ्खला ।।
(ल. वा. १७. ५)

तावन्निशीथवेताला वल्गन्ति हृदि वासनाः ।
एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः ।।
(ल. वा. १५. २३)

प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः ।
पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ।।
(ल. वा. १५. २२)

हस्तं हस्तेन संपीड्य दन्तैर्दन्तान् विचूर्ण्य च ।
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ।।
(ल. वा. १५. १८)

एतावति धरणितले सुभगास्ते साधुचेतसः पुरुषाः ।
पुरुषकथासु च गण्या न जिता ये चेतसा स्वेन ।।
(ल. वा. १५. १९)

हृदयबिले कृतकुण्डल उल्बणकलनाविषो मनोभुजगः ।
यस्योपशान्तिमगमच्चन्द्रवदुदितं तमव्ययं वन्दे ।।'
(ल. वा. १५. २०)

'चित्तं नाभिः किलास्येदं मायाचक्रस्य सर्वतः ।
स्थीयते चेत्तदाक्रम्य तन्न किंचित्प्रबाधते ।।'
(ल. २३. ९२) इति ।

गौडपादाचार्यैरप्युक्तम्–

'मनसो निग्रहायत्तमभयं सर्वयोगिनाम् ।
दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ।।'
(मा. उ. ३. ४०) इति ।

यत्त्वर्जुनेनोक्तम्–

'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ।।'
(भ. गी. ६. ३४) इति ।

तद्वचनं हठयोगविषयम् । अत एव वाल्मीकिराह–

'उपविश्योपविश्यैकचित्तकेन मुहुर्मुहुः ।
न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ।।
अङ्कुशेन विना मत्तो यथा दुष्टमतङ्गजः ।
विजेतुं शक्यते नैव तथा युक्त्या विना मनः ।।'
(ल. वा. २८. २६-७)

मनोविलयहेतूनां युक्तीनां सम्यगीरणम् ।
वसिष्ठेन कृतं तावत् तन्निष्ठस्य वशे मनः ।।
हठतो युक्तितश्चापि द्विविधो निग्रहो मतः ।
निग्रहो धीक्रियाक्षाणां हठो गोलकनिग्रहात् ।।
कदाचिज्जायते कश्चिन्मनस्तेन विलीयते ।
अध्यात्मविद्याधिगमः साधुसंगम एव च ।।
वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् ।
एतास्तु युक्तयः पुष्टाः सन्ति चित्तजये किल ।।
सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये ।
चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोऽञ्जनैः ।।

विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयम् ।
ते निबध्नन्ति नागेन्द्रमुन्मत्तं बिसतन्तुभिः ।। '
(ल. वा. २८. २८–३१) इति ।

निग्रहो द्विविधः, हठनिग्रहः क्रमनिग्रहश्चेति । तत्र चक्षुःश्रोत्रादिज्ञानेन्द्रियाणि वाक्पाण्यादिकर्मेन्द्रियाणि च तत्तद्गोलकोपरोधमात्रेण हठान्निगृह्यन्ते; तद्दृष्टान्तेन मनोऽपि तथा निग्रहीष्यामीति मूढस्य भ्रान्तिर्भवति । न तु तन्निग्र ीतुं शक्यते, तद्गोलकस्य हृदयकमलस्य निरोद्धुमशक्यत्वात् । अतः क्रमनिग्रह एव योग्यः । क्रमनिग्रहे चाध्यात्मविद्याप्राप्त्यादय एवोपायाः । सा च विद्या दृश्यमिथ्यात्वं दृग्वस्तुनः स्वप्रकाशत्वं च बोधयति । तथा च सत्येतन्मनः स्वगोचरेषु दृश्येषु प्रयोजनाभावं प्रयोजनवति दृग्वस्तुन्यगोचरत्वं च बुद्ध्वा निरिन्धनाग्निवत्स्वयमेवोपशाम्यति । तथा च श्रूयते–

' यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति ।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ।। '
(मै. उ. ४. ४) इति ।

योनिरात्मा । यस्तु बोधितमपि तत्त्वं न सम्यग्बुध्यते, यश्च विस्मरति, तयोरुभयोः साधुसंगम एवोपायः । साधवो हि पुनः पुनर्बोधयन्ति स्मारयन्ति च । यस्तु विद्यामदादिदुर्वासनया पीड्यमानो न साधूननुवर्तितुमुत्सहते, तस्य पूर्वोक्तविवेकेन वासनापरित्याग उपायः । वासनानां प्राबल्येन त्यक्तुमशक्यत्वे प्राणस्पन्दनिरोधनमुपायः। प्राणस्पन्दवासनयोश्चित्तप्रेरकत्वात्तयोर्निरोधे चित्तशान्तिरुपपद्यते । प्रेरकत्वं च वसिष्ठ आह–

' द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः ।
एकं प्राणपरिस्पन्दो द्वितीयं दृढवासना ।।
(ल. वा. २८. ३८.)

सती सर्वगता संवित्प्राणस्पन्देन बोध्यते ।
संवेदनादनन्तानि ततो दुःखानि चेतसः ।। '
(ल. वा. २८. ४०) इति ।

यथा भस्मच्छन्नमग्निं लोहकारा दृतिभ्यां धमन्ति, तत्र च दृत्युत्पन्नेन वायुना सोऽग्निर्ज्वलति, तथा चित्तोपादानेन काष्ठस्थानीयेनाज्ञानेनावृता संवित्प्राणस्पन्देन बोध्यमाना चित्तवृत्तिरूपेण प्रज्वलति । तस्माच्चित्तवृत्तिनामकात् संविज्ज्वालारूपात् संवेदनाद् दुःखान्युत्पद्यन्ते । सेयं प्राणस्पन्देन प्रेरिता चित्तोत्पत्तिः । अन्यां च स एवाह–

' भावसंवित्प्रकटितामनुभूतां च राघव ।
चित्तस्योत्पत्तिमपरां वासनाजनितां शृणु ।।
दृढाभ्यस्तपदार्थैकभावनादतिचञ्चलम् ।
चित्तं संजायते जन्मजरामरणकारणम् ।। ' इति ।

न केवलं प्राणवासनयोश्चित्तप्रेरकत्वम्, किं तु परस्परप्रेरकत्वमप्यस्ति । तदाह वसिष्ठः–

' वासनावशतः प्राणस्पन्दस्तेन च वासना ।
जायते चित्तवृक्षस्य तेन बीजाङ्कुरक्रमः ।। '
(ल. वा. २८. ६५. ) इति ।

अत एवान्यतरनाशेनोभयनाशमप्याह–

'द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने ।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥'
(ल. वा. २८. ३४) इति ।

तयोर्नाशोपायं नाशफलं चाह—

'प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया ।
आसनाशनयोगेन प्राणस्पन्दो निरुध्यते ॥
(ल. वा. २८ १२२)

असङ्गव्यवहारित्वाद् भवभावनवर्जनात् ।
शरीरनाशदर्शित्वाद् वासना न प्रवर्तते ॥
(ल. वा. २८. १२३.)

वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् ।
प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु ॥
(ल. वा. २८. १२१)

एतावन्मात्रकं मन्ये रूपं चित्तस्य राघव ।
यद्भावनं वस्तुनोऽन्तर्वस्तुत्वेन रसेन च ॥
(ल. वा. २८. ५७)

यदा न भाव्यते किंचिद्धेयोपादेयरूपि यत् ।
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ॥
(ल. वा. २८. ५४)

अवासनत्वात् सततं यदा न मनुते मनः ।
अमनस्ता तदोदेति परमोपशमप्रदा ॥'
(ल. वा. २८. ५५) इति ।

अमनस्तानुदये शान्त्यभावमाह–

'चित्तयक्षदृढाक्रान्तं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं गुरवो न च मानवाः ।।' इति ।

आसनाशनयोगेनेति यदुक्तं तत्रासनस्य लक्षणमुपायं फलं च त्रिभिः सूत्रैः पतञ्जलिः सूत्रयामास—'स्थिरसुखमासनम्' (२. ४६) 'प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम्' (२. ४७) 'ततो द्वन्द्वानभिघातः' (२. ४८) इति । पद्मकस्वस्तिकादिना यादृशेन देहस्थापनरूपेण यस्य पुरुषस्यावयवव्यथानुत्पत्तिलक्षणं सुखं स्वदेहचलनराहित्यलक्षणं स्थैर्यं च संपद्यते, तस्य तदेव सुखमासनम् । तस्य च प्रयत्नशैथिल्यं लौकिक उपायः । गमनगृहकृत्यतीर्थयात्रास्नानहोमादिविषयो यः प्रयत्नो मानस उत्साहस्तस्य शैथिल्यं कर्तव्यम् । अन्यथा स उत्साहो बलाद् देहमुत्थाप्य यत्र क्वापि प्रेरयति । अलौकिकोपायश्च 'फणासहस्रेण धरणीं धारयित्वा स्थैर्येणावतिष्ठते योऽयमनन्तः स एवाहमस्मि' इति ध्यानं चित्तस्यानन्तसमापत्तिः । तया यथोक्तासनसंपादकमदृष्टं निष्पद्यते । सिद्धे चासने शीतोष्णसुखदुःखमानावमानादिद्वन्द्वैर्यथापूर्वं नाभिहन्यते । तथाविधस्य चासनस्य योग्यो देशः श्रूयते–

'विविक्तदेशे च सुखासनस्थः
शुचिः समग्रीवशिरःशरीरः ।।' (कै. उ. ४. )इति,

'समे शुचौ शर्करवह्निवालुका-
विवर्जिते शब्दजलाशयादिभिः ।
मनोनुकूले न तु चक्षुपीडने
गुहानिवाताश्रयणे प्रयोजयेत् ।।'
(श्वे. उ. २. १०) इति च ।

सोऽयमासनयोगः ।

अशनयोगस्तु मिताहारत्वम्,

‘अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ।’

इति श्रुतेः ।

भगवताप्युक्तम्—

‘नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ।।
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ।।’

(भ. गी. ६. १६, १७) इति ।

जितासनस्य प्राणायामेन मनोविनाशः श्वेताश्वतरैराम्नायते—

‘त्रिरुन्नतं स्थाप्य समं शरीरं
हृदीन्द्रियाणि मनसा संनिवेश्य ।
ब्रह्मोडुपेन प्रतरेत विद्वान्
स्रोतांसि सर्वाणि भयावहानि ।।
प्राणान् प्रपीड्येह स युक्तचेष्टः
क्षीणे प्राणे नासिकयोच्छ्वसीत ।
दुष्टाश्वयुक्तमिव वाहमेनं
विद्वान्मनो धारयेताप्रमत्तः ।।’

(श्वे. उ. २. ८, ९) इति ।

योगी द्विविधः, विद्यामदाद्यासुरसंपद्रहितस्तत्सहितश्चेति । तयोराद्यस्य ब्रह्मध्यानेन मनसि निरुद्धे सति, तन्नान्तरीयकतया प्राणो निरुध्यते । तं प्रति ‘त्रिरुन्नतम्—’ इति मन्त्रः पठितः ।

द्वितीयस्याभ्यासेन प्राणे निरुद्धे, तन्नान्तरीयकतया मनो निरुध्यते। तं प्रति 'प्राणान्प्रपीड्य—' इति मन्त्रः प्रवृत्तः। प्राणपीडन-प्रकारो वक्ष्यते। तेन च पीडनेन युक्तचेष्टो भवति। मनश्चेष्टा विद्यामदादयो निरुध्यन्ते। प्राणनिरोधेन चित्तदोषनिरोधे दृष्टान्तोऽन्यत्र श्रूयते–

'यथा पर्वतधातूनां दह्यन्ते धमनान्मलाः।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात्॥'
(अ. ना. उ. ७) इति।

अत्रोपपत्तिर्वसिष्ठेन दर्शिता–

'यः प्राणपवनस्पन्दश्चित्तस्पन्दः स एव हि।
प्राणस्पन्दक्षये यत्नः कर्तव्यो धीमतोच्चकैः॥'
(ल. वा. २८, १२५) इति।

मनोवाक्चक्षुरादीन्द्रियदेवताः स्वस्वव्यापारं निरन्तरं करिष्याम इति व्रतं धृत्वा श्रमरूपेण मृत्युना ग्रस्ताः। स च मृत्युः प्राणं नाप्नोत्। ततो निरन्तरमुच्छ्वासनिःश्वासौ कुर्वन्नप्ययं प्राणो न श्राम्यति। तदा विचार्य देवताः प्राणरूपं प्राविशन्। सोऽयमर्थो वाजसनेयिभिराम्नायते–'अयं वै नः श्रेष्ठो यः संचरंश्चासंचरंश्च न व्यथते अथो न रिष्यति हन्तास्यैव सर्वे रूपमसामेति। एतस्यैव सर्वे रूपमभवंस्तस्मादेत एतेनाख्यायन्ते प्राणाः' (बृ. उ. १. ५. २१) इति। अत इन्द्रियाणां प्राणरूपत्वं नाम प्राणाधीनचेष्टावत्त्वम्। तच्चान्तर्यामिब्राह्मणे सूत्रात्मप्रस्तावे श्रूयते– 'वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति। तस्माद्वै गौतम

पुरुषं प्रेतमाहुर्व्यस्त्रंसिषतास्याङ्गानीति । वायुना हि गौतम सूत्रेण संदृब्धानि भवन्ति' (बृ. उ. ३. ७. २) इति । अतः प्राणमनःस्पन्दयोः सहभावित्वात् प्राणनिग्रहे मनो निगृह्यते । ननु सहस्पन्दो न युक्तः, सुषुप्तौ चेष्टमानेऽपि प्राणे मनसोऽचेष्टमानत्वात् । न, विलीनत्वेन तदानीं मनसः सत्त्वाभावात् । ननु क्षीणे प्राणे नासिकयोच्छ्वसीतेति व्याहतम् । न हि क्षीणप्राणस्य मृतस्य श्वासं क्वचित्पश्यामः । नापि श्वसतो जीवतः प्राणक्षयोऽस्ति । मैवम्, अनुल्बणत्वस्य क्षयत्वेनात्र विवक्षित्वात् । तथा खननच्छेदनादिषु व्याप्रियमाणस्य पर्वतमारोहतः शीघ्रं धावतो वा श्वासवेगो यावान्भवति, न तावान्स्थितस्यासीनस्य निद्रितस्य वा विद्यते, तथा प्राणायामपाटवोपेतस्येतरस्मादल्पः श्वासो भवति । एतदेवाभिप्रेत्य श्रूयते–

'भूत्वा तत्रायतप्राणः शनैरेव समुच्छ्वसेत् ।' इति । यथा दुष्टैरश्वैरुपेतो रथो मार्गं त्यक्त्वा यत्र क्वापि नीयते, स च सारथिना दृढमश्वं रज्जुष्वाकृष्य सुखमार्गे पुनर्धार्यते, तथेन्द्रियैर्वासनादिभिरितस्ततो नीयमानं चित्तं प्राणरज्जौ दृढं धृतायां धार्यते ।

'प्राणान् प्रपीड्य' इति यदुक्तं तत्र प्राणपीडनप्रकारोऽन्यत्र श्रूयते–

'सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
प्राणायामास्त्रयः प्रोक्ता रेचपूरककुम्भकाः ।
उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् ॥

शून्यभावेन युञ्जीत रेचकस्येति लक्षणम् ।
वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः ।।
एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ।
नोच्छ्वसेन्निःश्वसेन्नैव नैव गात्राणि चालयेत् ।।
एवं तावन्नियुञ्जीत कुम्भकस्येति लक्षणम् ।। '
(अ. ना. उ. ११–१४) इति ।

अत्र शरीरान्तर्गतं वायुं बहिर्निःसारयितुमुत्क्षिप्य शारीरमाकाशं शून्यं निरात्मकं वायुरहितं कृत्वा स्वल्पमपि वायुमप्रवेश्य शून्यभावेनैव नियमयेत् । सोऽयं रेचको भवति । कुम्भको द्विविधः, आन्तरो बाह्यश्चेति । तदुभयं च वसिष्ठ आह–

' अपानेऽस्तं गते प्राणो यावन्नाभ्युदितो हृदि ।
तावत्सा कुम्भकावस्था योगिभिर्यानुभूयते ।।
(ल. वा. २९. २११)

बहिरस्तं गते प्राणे यावन्नापान उद्गतः ।
तावत् पूर्णसमावस्थां बहिःष्ठं कुम्भकं विदुः ।। '
(ल. वा. २९. २१६) इति ।

तत्रोच्छ्वास आन्तरकुम्भकविरोधी ; निःश्वासो बाह्यकुम्भकविरोधी; गात्रचालनमुभयविरोधि, तस्मिन्सति निःश्वासोच्छ्वासयोरन्यतरस्यावश्यंभावित्वात् । पतञ्जलिरप्यासनानन्तरभाविनं प्राणायामं सूत्रयामास–' तस्मिन्सति निःश्वासोच्छ्वासयोर्गतिविच्छेदः प्राणायामः ' (२. ४९) इति । ननु कुम्भके गत्यभावेऽपि रेचकपूरकयोरुच्छ्वासनिःश्वासगती विद्येते इति चेन्न, अधिकमात्राभ्यासेन स्वभावसिद्धायाः समप्राणगतेर्विच्छेदात् ।

तमेवाभ्यासं सूत्रयति–‘बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घः सूक्ष्मः’ (२. ५०) इति। रेचको बाह्यवृत्तिः। पूरक आभ्यन्तरवृत्तिः। कुम्भकः स्तम्भवृत्तिः। तत्रैकैको देशादिभिः परीक्षणीयः। तद्यथा––स्वभावसिद्धे रेचके हृदयान्निर्गत्य नासाग्रसंमुखे द्वादशाङ्गुलपर्यन्ते श्वासः समाप्यते; अभ्यासेन तु क्रमेण नाभेराधाराद्वा वायुर्निर्गच्छति; चतुर्विशत्यङ्गुलपर्यन्ते षट्त्रिंशदङ्गुलपर्यन्ते वा समाप्तिः। अत्र रेचके प्रयत्नातिशये सति नाभ्यादिप्रदेशक्षोभेणान्तर्निश्चेतुं शक्यम्; बहिश्च सूक्ष्मं तूलं धृत्वा तच्चालनेन निश्चेतव्यम्। सेयं देशपरीक्षा। रेचककाले प्रणवस्यावृत्तयो दश विंशतिस्त्रिंशदित्यादिभिः कालपरीक्षा। अस्मिन्मासे प्रतिदिनं दश रेचकाः आगामिमासे विंशतिः, उत्तरमासे त्रिंशदित्यादिभिः संख्यापरीक्षा। यथोक्तदेशकालविशिष्टाः प्राणायामा एकस्मिन्दिने दश विंशतिस्त्रिंशदित्यादिभिः संख्यापरीक्षा। पूरकेऽप्येवं योजनीयम्। यद्यपि कुम्भके देशव्याप्तिविशेषो नावगम्यते, तथापि कालसंख्याव्याप्तिरवगम्यत एव। यथा घनीभूतस्तूलपिण्डः प्रसार्यमाणो दीर्घो विरलतया सूक्ष्मश्च भवति, तथा प्राणोऽपि देशकालसंख्याधिक्येनाभ्यस्यमानो दीर्घो दुर्लक्षतया सूक्ष्मश्च संभवति। रेचकादिभ्यस्त्रिभ्योऽन्यं प्रकारं सूत्रयति––‘बाह्याभ्यन्तरविषयानपेक्षी चतुर्थः’ (२. ५१) इति। यथाशक्ति सर्वं वायुं विरेच्यानन्तरं क्रियमाणो बहिष्कुम्भकः यथाशक्ति वायुमापूर्यानन्तरं क्रियमाणोऽन्तःकुम्भकः, इति रेचकपूरकावनादृत्य केवलः कुम्भकोऽभ्यस्यमानः पूर्वत्रयापेक्षया चतुर्थो भवति। निद्रातन्द्रादिप्रबलदोषयुक्तानां रेचकादित्रयम्; दोषरहितानां चतुर्थ इति

विवेकः। प्राणायामफलं सूत्रयति–'ततः क्षीयते प्रकाशावरणम्' (२.५२) इति। प्रकाशस्य सत्त्वस्यावरणं तमो निद्रालस्यादिहेतुः, तस्य क्षयो भवति। क्षये सति फलान्तरं सूत्रयति –'धारणासु च योग्यता मनसः' (२. ५३) इति। आधारनाभिचक्रहृदय-भ्रूमध्यब्रह्मरन्ध्रादिदेशविशेषे विकृष्य चित्तस्य स्थापनं धारणा, 'देशबन्धश्चित्तस्य धारणा' (३. १) इति सूत्रणात्। श्रुतिश्च–

'मनः संकल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान्।
धारयित्वा तथात्मानं धारणा परिकीर्तिता॥'

(अ. ना. उ. १५) इति।

प्राणायामेन रजोगुणकार्याच्चाञ्चल्यात्तमोगुणकार्यादालस्यादेश्च निवारितं मनस्तस्यां धारणायां योग्यं भवति।

'प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया।'

(ल. वा. २८. १२२)

इत्यत्रत्येन युक्तिशब्देन योगिजनप्रसिद्धं शिरोरूपमेरुचालनम्, जिह्वाग्रेण घण्टिकाभ्रमणम्, नाभिचक्रे हृदये च ज्योतिर्ध्यानम्, विस्मृतिप्रदौषधसेवा चेत्येवमादिकं गृह्यते।

तदेवमध्यात्मविद्यासाधुसंगमवासनाक्षयप्राणनिरोधाश्चित्तनाशोपाया दर्शिताः। अथ तदुपायभूतं समाधिं वक्ष्यामः। पञ्चभूम्युपेतस्य चित्तस्य भूमित्रयत्यागेनावशिष्टं भूमिद्वयं समाधिः। भूमयश्च योगभाष्यकृता दर्शिताः—'क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति पञ्च चित्तस्य भूमयः' (यो. सू. भा. १. १) इति। आसुरसंपल्लोकशास्त्रदेहवासनासु वर्तमानं

चित्तं क्षिप्तम्, निद्रातन्द्रादिग्रस्तं मूढम्, कादाचित्कध्यानयुक्तं क्षिप्ताद्विशिष्टतया विक्षिप्तम्। तत्र क्षिप्तमूढयोः समाधिशङ्कैव नास्ति। विक्षिप्ते तु चेतसि विक्षेपोपसर्जनीभूतः समाधिर्योगपक्षे न वर्तते। विक्षेपान्तर्गततया दहनान्तर्गतबीजवत्स सद्य एव विनश्यति। यस्त्वेकाग्रे चेतसि संभूतमर्थं द्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखीकरोति, स संप्रज्ञातयोग इत्याख्यायते। सर्ववृत्तिनिरोधे त्वसंप्रज्ञातसमाधिः। तत्र संप्रज्ञातसमाधिभूमिमेकाग्रतां सूत्रयति—'शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः' (३. १२) इति। शान्तोऽतीतः। उदितो वर्तमानः। प्रत्ययश्चित्तवृत्तिः। अतीतः प्रत्ययो यं पदार्थं गृह्णाति तमेव चेदुदितो गृह्णीयात् तदा तावुभौ तुल्यौ भवतः। तादृशश्चित्तस्य परिणाम एकाग्रतेत्युच्यते। एकाग्रताभिवृद्धिलक्षणं समाधिं सूत्रयति —'सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः' (३. ११) इति। रजोगुणेन चाल्यमानं चित्तं क्रमेण सर्वान्पदार्थान्गृह्णाति। तस्य रजोगुणस्य निरोधाय क्रियमाणेन योगिनः प्रयत्नविशेषेण दिने दिने सर्वार्थता क्षीयते; एकाग्रता चोदेति ; तादृशश्चित्तस्य परिणामः समाधिरित्युच्यते। तस्य समाधेरष्टस्वङ्गेषु यमनियमासनप्राणायामप्रत्याहाराः पञ्च बहिरङ्गानि। तत्र यमान्सूत्रयति–'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' (२. ३०) इति। हिंसादिभ्यो निषिद्धधर्मेभ्यो योगिनं यमयन्तीति यमाः। नियमान्सूत्रयति—'शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' (२. ३२) इति। जन्महेतोः काम्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामधर्मे नियमयन्ति प्रेरयन्तीति नियमाः। यमनियमयोरनुष्ठानवैलक्षण्यं स्मर्यते–

'यमान् कुर्वीत सततं न कुर्यान्नियमान् बुधः ।
यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन् ।। '
'पतति नियमवान् यमेष्वसक्तो
न तु यमवान्नियमालसोऽवसीदेत् ।
इति यमनियमौ समीक्ष्य बुद्ध्या
यमबहुलेष्वनुसंदधीत बुद्धिम् ।। ' इति ।

यमनियमफलानि सूत्रयति—'तत्संनिधौ वैरत्यागः, क्रियाफलाश्रयत्वम्, सर्वरत्नोपस्थानम्, वीर्यलाभः, जन्मकथंतासंबोधः, जननादिभयाभावः, 'शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः,' 'सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च' संभवन्ति । 'संतोषादनुत्तमः सुखलाभः' 'कायेन्द्रियबुद्धिशुद्धिरशुद्धिक्षयात् तपसः', 'स्वाध्यायादिष्टदेवतासंप्रयोगः', समाधिसिद्धिरीश्वरप्रणिधानात्' (२. ३५—४५) इति । आसनप्राणायामौ व्याख्यातौ । प्रत्याहारं सूत्रयति—'स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः' (२. ५४) इति । शब्दस्पर्शरूपरसगन्धा विषयाः, तेभ्यो निवर्तिताः श्रोत्रादयश्चित्तस्वरूपमनुकुर्वन्त इवावतिष्ठन्ते । श्रुतिश्च भवति—

'शब्दादिविषयान् पञ्च मनश्चैवातिचञ्चलम् ।
चिन्तयेदात्मनो रश्मीन् प्रत्याहारः स उच्यते ।। '
(अ. ना. उ. ५.) इति ।

शब्दादयो विषया येषां श्रोत्रादीनां ते श्रोत्रादयः पञ्च ; मनः षष्ठानामेतेषामनात्मरूपेभ्यः शब्दादिभ्यो निवर्तनमात्मरश्मित्वेन चिन्तनम् ; प्रत्याहारः स इत्यर्थः । प्रत्याहारफलं सूत्रयति—

'ततः परमा वश्यतेन्द्रियाणाम्' (२. ५५) इति। धारणा-ध्यानसमाधीन् सूत्रैस्त्रिभिः सूत्रयति—'देशबन्धश्चित्तस्य धारणा' (३. १) 'तत्र प्रत्ययैकतानता ध्यानम्' (३. २) 'तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः' (३. ३) इति। आधारादिदेशाः पूर्वमुक्ताः। देशान्तरं श्रूयते—

'मनः संकल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान्।
धारयित्वा तथात्मानं धारणा परिकीर्तिता॥'
(अ. ना. उ. १५) इति।

'यत्सर्ववस्तुसंकल्पकं मनः, तदात्मानमेव संकल्पयतु न त्वन्यत्' इत्येवंविधः प्रयत्न आत्मनि संक्षेपः। प्रत्ययस्यैकतानता तत्त्वैक-विषयः प्रवाहः। स च द्विविधः—विच्छिद्य विच्छिद्य जायमानः, संततश्चेति। तावुभौ क्रमेण ध्यानसमाधी भवतः। तदुभयं सर्वानुभवयोगिना दर्शितम्—

'चित्तैकाग्र्याद्यतो ज्ञानमुक्तं समुपजायते।
तत्साधनमतो ध्यानं यथावदुपदिश्यते॥
विलाप्य विकृतिं कृत्स्नां संभवव्यत्ययक्रमात्।
परिशिष्टं च सन्मात्रं चिदानन्दं विचिन्तयेत्॥'
इति।

'ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना।
संप्रज्ञातसमाधिः स्याद् ध्यानाभ्यासप्रकर्षजः॥'
इति च।

तं च भगवत्पादा उदाजह्रुः—

'दृशिस्वरूपं गगनोपमं परं
सकृद्विभातं त्वजमेकमक्षरम्।

अलेपकं सर्वगतं यदद्वयं
तदेव चाहं सततं विमुक्त ओम् ।।
दृशिस्तु शुद्धोऽहमविक्रियात्मको
न मेऽस्ति कश्चिद्विषयः स्वभावतः ।
पुरस्तिरश्चोर्ध्वमधश्च सर्वतः
संपूर्णभूमा त्वज आत्मनि स्थितः ।।
अजोऽमरश्चैव तथाजरोऽमृतः
स्वयंप्रभः सर्वगतोऽहमद्वयः ।
न कारणं कार्यमतीव निर्मलः
सदैव तृप्तश्च ततो विमुक्त ओम् ।। '
(उप. १०. १–३) इति ।

ननु संप्रज्ञातसमाधिरङ्गी ; स कथं ध्यानानन्तरभाविनोऽष्टमाङ्गस्य समाधेः स्थान उदाह्रियते ? नायं दोषः, अत्यन्तभेदाभावात् । यथा वेदमधीयानो माणवकः पदे पदे स्खलन् पुनः पुनः समादधाति, अधीतवेदस्तु सावधानो न स्खलति, अध्यापको निरवधानस्तन्द्रां कुर्वन्नपि न स्खलति ; तथा विषयैक्येऽपि परिपाकतारतम्येन ध्यानसमाधिसंप्रज्ञातानामवान्तरभेदोऽवगन्तव्यः । धारणादित्रयं मनोविषयत्वात् संप्रज्ञातसमाधेरन्तरङ्गम् । यमादिपञ्चकं तु बहिरङ्गम् । तदेतत्सूत्रयति—'त्रयमन्तरङ्गं पूर्वेभ्यः' (३. ७) इति । ततः केनापि पुण्येनान्तरङ्गे प्रथमं लब्धे बहिरङ्गलाभाय नातिप्रयासः कर्तव्यः । यद्यपि पतञ्जलिना भौतिकभूततन्मात्रेन्द्रियाहंकारादिविषयाः संप्रज्ञातसविकल्पसमाधयो बहुधा प्रपञ्चिताः, तथापि तेषामन्तर्धानादिसिद्धिहेतुतया मुक्तिहेतुसमाधिविरोधित्वान्नास्माभिस्तत्रादरः क्रियते ।

तथा च सूत्रितम्—'ते समाधावुपसर्गा व्युत्थाने सिद्धयः' (३. ३८) इति, 'स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्' (३. ५२) इति च। स्थानिनो देवाः। उद्दालको देवैरामन्त्रितोऽप्यवज्ञाय तान्देवान्निर्विकल्पसमाधिमेव चकारेत्युपाख्यायते। प्रश्नोत्तराभ्यामप्येवमेवावगम्यते—

श्रीरामः—

'जीवन्मुक्तशरीराणां कथमात्मविदां वर।
शक्तयो नेह दृश्यन्त आकाशगमनादिकाः॥'

(ल. वा. २८. १)

वसिष्ठः—

'अनात्मविदमुक्तोऽपि नभोविहरणादिकम्।
द्रव्यमन्त्रक्रियाकालशक्त्याप्नोत्येव राघव॥
नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्ममात्रदृक्।
आत्मनात्मनि संतृप्तो नाविद्यामनुधावति॥

(ल. वा. २८. २, ३)

ये केचन जगद्भावास्तानविद्यामयान् विदुः।
कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो निमज्जति॥

(ल. वा. २८. ५)

द्रव्यमन्त्रक्रियाकालशक्तयः साधु सिद्धिदाः।
परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन॥

(ल. वा. २८. ७)

सर्वेच्छाजालसंशान्तावात्मलाभोदयो हि यः।
स कथं सिद्धिवाञ्छायां मग्नचित्तेन लभ्यते॥'

(ल. वा. २८. ९)

' न केचन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी ।
नागरं नागरीकान्तं कुग्रामललना इव ।। ' इति,
' अपि शीतरुचावर्के सुतीक्ष्णेऽपीन्दुमण्डले ।
अप्यध: प्रसरत्यग्नौ जीवन्मुक्तो न विस्मयी ।।

(ल. वा. २७. ६६)

चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तय: ।
इत्यस्याश्चर्यजालेषु नाभ्युदेति कुतूहलम् ।। '

(ल. वा. २७. ६७)

'यस्तु वा भावितात्मापि सिद्धिजालानि वाञ्छति ।
स सिद्धिसाधकैर्द्रव्यैस्तानि साधयति क्रमात् ।। '

इति च ।

आत्मविषयस्तु संप्रज्ञातसमाधिर्वासनाक्षयस्य निरोधसमाधेश्च हेतु: । तस्मादत्रादर: कृत: ।

अथ पञ्चमभूमिरूपो निरोधसमाधिर्निरूप्यते। तं च निरोधं सूत्रयति—' व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणाम: ' (३. ९) इति । व्युत्थानसंस्कारा: समाधिविरोधिन: । ते चोद्दालकस्य समाधावुदाहृता:—

' कदाहं त्यक्तमनने पदे परमपावने ।
चिरं विश्रान्तिमेष्यामि मेरुश्रृङ्ग इवाम्बुद: ।।
इति चिन्तापरवशो बलादु ालको द्विज: ।
पुन: पुनस्तूपविश्य ध्यानाभ्यासं चकार ह ।।

विषयैर्नीयमाने तु चित्ते मर्कटचञ्चले ।
न स लेभे समाधाने प्रतिष्ठां प्रीतिदायिनीम् ।।
कदाचिद्बाह्यसंस्पर्शपरित्यागादनन्तरम् ।
तस्यागच्छच्चित्तकपिरान्तरस्पर्शसंचयान् ।।
कदचिदान्तरस्पर्शाद् बाह्यं विषयमाददे ।
तस्योड्डीय मनो याति कदाचित् त्रस्तपक्षिवत् ।।
कदाचिदुदितार्काभं तेजः पश्यति विस्तृतम् ।
कदाचित् केवलं व्योम कदाचिन्निबिडं तमः ।।
(ल. वा. २४. २६. ३५–६)

आगच्छतो यथाकामं प्रतिभासान् पुनः पुनः ।
अच्छिनन्मनसा शूरः खड्गेनेव रणे रिपून् ।।
विकल्पौघे समालूने सोऽपश्यद्धृदयाम्बरे ।
तमश्छन्नविवेकार्कं लोलकज्जलमेचकम् ।।
तदप्युत्सादयामास सम्यग्ज्ञानविवस्वता ।
तमस्युपरते स्वान्ते तेजःपुञ्जं ददर्श सः ।
तल्लुलाव स्थलाब्जानां वनं बाल इव द्विपः ।।
तेजस्युपरते तस्य घूर्णमानं मनो मुनेः ।
निशाब्जवदगान्निद्रां तामप्याशु लुलाव सः ।।
निद्राव्यपगमे तस्य व्योमसंवित्समुद्ययौ ।
व्योमसंविदि नष्टायां मूढं तस्याभवन्मनः ।
मोहमप्येष मनसस्तं ममार्ज महाशयः ।।
ततस्तेजस्तमोनिद्रामोहादिपरिवर्जिताम् ।
कामप्यवस्थामासाद्य विशश्राम मनः क्षणम् ।। '
(ल. वा. २४. १०६–११४) इति ।

त एते व्युत्थानसंस्कारा निरोधहेतुना योगिप्रयत्नेन प्रतिदिनं प्रतिक्षणं चाभिभूयन्ते; तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति। तथा सति निरोध एकैकस्मिन्क्षणे चित्तमनुगच्छति। सोऽयमीदृशश्चित्तस्य निरोधपरिणामो भवति। ननु 'प्रतिक्षणपरिणामिनो हि भावा ऋते चितिशक्तेः' इति न्यायेन चित्तस्य सर्वदा परिणामप्रवाहो वक्तव्यः। बाढम्। तत्र व्युत्थितचित्तस्य वृत्तिप्रवाहः स्फुटः; निरुद्धचित्तस्य तु कथमित्याशङ्कयोत्तरं सूत्रयति–'ततः प्रशान्तवाहिता संस्कारात्' (३. १०) इति। यथा समिदाज्याहुतिप्रक्षेपे वह्निरुत्तरोत्तरवृद्धया प्रज्वलति, समिदादिक्षये प्रथमक्षणे किंचिच्छाम्यति, उत्तरोत्तरक्षणे शान्तिर्वर्धते। तथा निरुद्धचित्तस्योत्तरोत्तराधिकः प्रशमः प्रवहति। तत्र पूर्वपूर्वप्रशमजनितः संस्कार एवोत्तरोत्तरप्रशमस्य कारणम्। तामेतां प्रशान्तवाहितां भगवान्विस्पष्टमुदाजहार–

'यदा विनियतं चित्तमात्मन्येवावतिष्ठते।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा॥
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति॥
सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम्।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते॥

तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ।। '

(भ. गी. ६. १८–२३) इति ।

निरोधसमाधेः साधनं सूत्रयति–'विरामप्रत्ययाभ्यासपूर्वकः संस्कारशेषोऽन्यः' (१. १८) इति विरामो वृत्त्युपरमः, तस्य प्रत्ययः कारणं वृत्त्युपरमार्थः पुरुषप्रयत्नः, तस्याभ्यासः पौनःपुन्येन संपादनम्, तत्पूर्वकस्तज्जन्यः, अनन्तरातीतसूत्रे संप्रज्ञातसमाधेरुक्तत्वात् तदपेक्षयान्योऽसंप्रज्ञातः समाधिः । तत्र वृत्तिरहितस्य चित्तस्वरूपस्य दुर्लक्षत्वात् संस्काररूपेण चित्तं शिष्यते । विरामप्रत्ययजन्यत्वं भगवान्विस्पष्टमाह–

'संकल्पप्रभावान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ।।
शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ।।
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ।। '

(भ. गी. ६. २४–२६) इति ।

काम्यमानाः स्रक्चन्दनवनितापुत्रमित्रगृहक्षेत्रादयो मोक्षशास्त्रकुशलविवेकिजनप्रसिद्धैर्बहुभिर्दोषैरुपेता अप्यनाद्यविद्यावशात् तान्दोषानाच्छाद्य तेषु विषयेषु सम्यक्त्वं मनः कल्पयति । तस्माच्च संकल्पादिदं मे स्यादित्येवंरूपाः कामाः प्रभवन्ति । तथा च स्मर्यते–

‘ संकल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः ।
काम जानामि ते मूलं संकल्पात् किल जायसे ।
न त्वां संकल्पयिष्यामि समूलस्त्वं विनङ्क्ष्यसि ।। ’
इति ।

तत्र विवेकेन विषयदोषेषु साक्षात्कृतेषु शुना वान्ते पायस इव कामास्त्यज्यन्ते । स्रक्चन्दनादिष्विव ब्रह्मलोकादिष्वणिमाद्यष्टैश्वर्येषु च कामास्त्याज्या इत्यभिप्रेत्य सर्वानित्युक्तम् । मासोपवासव्रतिना तस्मिन्मासेऽन्ने त्यक्तेऽपि कामः पुनः पुनरुदेति ; तद्वन्मा भूदित्यशेषत इत्युक्तम् । कामत्यागे मनःपूर्वकप्रवृत्त्यभावेऽपि चक्षुरादीनां रूपादिषु या स्वभावसिद्धा प्रवृत्तिः सापि प्रयत्नयुक्तेन मनसैव नियन्तव्या । देवतादर्शनादिष्वप्यननुसरणाय समन्तत इत्युक्तम् । भूमिकाजयक्रमेणोपरमस्य विवक्षितत्वाच्छनैः शनैरित्युक्तम् । ताश्च भूमिकाश्चतस्रः कठवल्लीषु श्रूयन्ते—

‘ यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ।।’
(१. ३. १३) इति ।

वाग्व्यापारो द्विविधः—लौकिको वैदिकश्च । जल्पादिरूपो लौकिकः, जपादिरूपो वैदिकः । तत्र लौकिकस्य बहुविक्षेपकरत्वाद् व्युत्थानकालेऽपि योगी तं परित्यजेत् । अत एव स्मर्यते—

‘ मौनं योगासनं योगस्तितिक्षैकान्तशीलता ।
निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनः ।। ’ इति ।

जपादिकं निरोधसमाधौ परित्यजेत् । सेयं वाग्भूमिः प्रथमा । तां भूमिं प्रयत्नमात्रेण कतिपयैर्दिनैर्मासैर्वत्सरैर्वा दृढं विजित्य

पश्चाद् द्वितीयायां मनोभूमौ प्रयतेत; अन्यथा बहुभूमिकाप्रासादवत्प्रथमभूमिपातेनैवोपरितनयोगभूमयः सर्वा विनश्येयुः। यद्यपि चक्षुरादयो निरोद्धव्याः, तथापि तेषां वाग्भूमौ मनोभूमौ वान्तर्भावो द्रष्टव्यः। ननु वाचं मनसि नियच्छेदित्यनुपपन्नम् ; न हीन्द्रियस्येन्द्रियान्तरे प्रवेशोऽस्ति। मैवम्, प्रवेशस्याविवक्षितत्वात्। नानाविक्षेपकारिणोर्वाङ्मनसयोर्मध्ये प्रथमतो वाग्व्यापारनियमनेन मनोव्यापारमात्रपरिशेष इह विवक्षितः। गोमहिषाश्वादीनामिव वाङ्नियमे स्वाभाविके संपन्ने ततो ज्ञानात्मनि मनो नियच्छेत्। आत्मा त्रिविधः, ज्ञानात्मा महात्मा शान्तात्मा चेति। जानात्यत्र स्थित आत्मेति ज्ञातृत्वोपाधिरहंकारोऽत्र ज्ञानशब्देन विवक्षितः, करणस्य मनसो नियम्यत्वेन पृथगुपात्तवात्। अहंकारो द्विविधः—विशेषरूपः सामान्यरूपश्चेति। 'अयमहमेतस्य पुत्र' इत्येवं व्यक्तमभिमन्यमानो विशेषरूपः। 'अस्मि' इत्येतावन्मात्रमभिमन्यमानः सामान्यरूपः। स च सर्वव्यक्तिषु व्याप्तत्वात्महानित्युच्यते। ताभ्यामहंकाराभ्यां द्वाभ्यामुपहितौ द्वावात्मानौ। निरुपाधिकः शान्तात्मा। तदेतत्सर्वमन्तर्बहिर्भावेन वर्तते। शान्त आत्मा सर्वान्तरश्चिदेकरसः। तस्मिन्नाश्रितं जडशक्तिरूपमव्यक्तं मूलप्रकृतिः। सा च प्रथमं सामान्याहंकाररूपेण महत्तत्त्वनाम्ना व्यक्तीभवति। ततो बहिर्विशेषाहंकाररूपेण, ततो बहिर्मनोरूपेण ततो बहिर्वागादीन्द्रियरूपेण। तदेतदभिप्रेत्योत्तरोत्तरमान्तरत्वं विविनक्ति श्रुतिः—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः॥

महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ।। '
(कठ. उ. १. ३. १०, ११) इति ।

एवं सत्यत्र नानाविधसंकल्पविकल्पसाधनं करणरूपं मनोऽहंकर्तरि नियच्छेत् । मनोव्यापारान्परित्यज्याहंकारमात्रं शेषयेत् । न चैतदशक्यमिति वाच्यम्,

'तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ।। '
(भ. गी. ६. ३४)

इति वदन्तमर्जुनं प्रति भगवतोत्तराभिधानात्–

'असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ।।
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ।। '
(भ. गी. ६. ३५, ३६) इति ।

अभ्यासवैराग्ये पतञ्जलिसूत्रोदाहरणेन व्याख्यास्येते । पूर्वपूर्वभूमिदाढर्च्यरहितोऽसंयतात्मा । तत्सहितो वश्यात्मा । उपायतः प्राप्ति गौडपादाचार्याः सदृष्टान्तमाहुः–

'उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना ।
मनसो निग्रहस्तद्वद् भवेदपरिखेदतः ।। '
(३. ४१) इति ।

'बहुभिर्न विरोद्धव्यमेकेनापि बलीयसा ।
स पराभवमाप्नोति समुद्र इव टिट्टिभात् ।। '

अत्र संप्रदायविद आख्यायिकामाचक्षते–'कस्यचित्किल पक्षिणोऽण्डानि तीरस्थान्युदधिरुत्सेकेनापजहार । तं च समुद्रं शोषयामीति प्रवृत्तः स च पक्षी स्वमुखाग्रेणैकैकं जलबिन्दुं बहिः प्रक्षिपति स्म । तदा बहुभिः पक्षिभिर्बन्धुवर्गैर्वार्यमाणोऽप्यनुपरतः प्रत्युत तानपि सहकारिणो वव्रे । तांश्च पतनोत्पतनाभ्यां बहुधा क्लिश्यतः सर्वानवलोक्य कृपालुर्नारदो गरुडं समीपे प्रेषयामास । ततो गरुडपक्षवातेन शुष्यन्समुद्रो भीतस्तान्यण्डान्यानीय पक्षिणे ददौ' । एवमखेदेन मनोनिरोधे परमधर्मे प्रवर्तमानं योगिनमीश्वरोऽनुगृह्णाति । अखेदश्च मध्ये मध्ये तदनुकूलव्यापारमिश्रणेन संपद्यते, यथौदनं भुञ्जानस्तत्तद्ग्रासान्तरे चोष्यलेह्यादीनास्वादयति तद्वत् । इदमेवाभिप्रेत्य वसिष्ठ आह–

'चित्तस्य भोगैर्द्वौ भागौ शास्त्रेणैकं प्रपूरयेत् ।
गुरुशुश्रूषया भागमव्युत्पन्नस्य सत्क्रमे ।।
किंचिद्व्युत्पत्तियुक्तस्य भागं भोगैः प्रपूरयेत् ।
गुरुशुश्रूषया भागौ भागं शास्त्रार्थचिन्तया ।।
व्युत्पत्तिमनुयातस्य पूरयेच्चेतसोऽन्वहम् ।
द्वौ भागौ शास्त्रवैराग्यैर्द्वौ ध्यानगुरुपूजया ।।'

(ल. वा. २१ ३६–८) इति ।

भोगशब्देनात्र जीवनहेतुर्भिक्षाटनादिव्यापारो वर्णाश्रमोचितव्यापारश्चोच्यते । घटिकामात्रं मुहूर्तं वा यथाशक्ति योगमभ्यस्य ततो मुहूर्तं शास्त्रश्रवणेन परिचर्यया वा गुरूननुगम्य मुहूर्तं स्वदेहमनुसृत्य मुहूर्तं योगशास्त्रं पर्यालोच्य पुनर्मुहूर्तं योगमभ्यस्येत् ।

एवं योगप्राधान्येन व्यापारान्तराणि मेलयंस्तानि द्रागभ्यस्य शयनकाले तद्दिनगतान् योगमुहूर्तान् गणयेत् । ततः परेद्युर्वा परपक्षे वा परमासे वा योगमुहूर्तान् वर्धयेत् । तथा चैकैकस्मिन्मुहूर्त एकैकक्षणयोगेऽपि संवत्सरमात्रेण भूयान्योगकालो भवति । न चैवं योगैकशरणत्वे व्यापारान्तराणि लुप्येरन्निति शङ्कनीयम्, लुप्तेतरकृत्स्नव्यापारस्यैव योगेऽधिकारात् । अत एव विद्वत्संन्यासोऽपेक्ष्यते । तस्मात् तदेकनिष्ठः पुमानध्येतृवणिगादिवत् क्रमेण योगारूढो भवति । यथाध्येता माणवकः पादांशं पादमर्धर्चमृचमृग्द्वयं वर्गं च क्रमेण पठन् दशद्वादशवर्षैरध्यापको भवति, यथा च वाणिज्यं कुर्वन्नेकनिष्कद्विनिष्कादिक्रमेण लक्षपतिः कोटिपतिर्वा भवति तथा ताभ्यां वणिगध्येतृभ्यां सहैवोपक्रम्य मत्सरग्रस्त इव युञ्जानस्तावता कालेन कुतो न योगमारोहेत् ? तस्मात् पुनः पुनः प्राप्यमाणान्संकल्पविकल्पानुद्दालकवत् पौरुषप्रयत्नेन परित्यज्याहंकर्तरि ज्ञानात्मनि मनो नियच्छेत् । तामेतां द्वितीयभूमिकां विजित्य बालमूकादिवन्निर्मनस्त्वे स्वाभाविके सति, ततो विशेषाहंकाररूपं विस्पष्टं ज्ञानात्मानमस्पष्टे सामान्याहंकारे महत्तत्त्वे नियच्छेत् । यथा स्वल्पां तन्द्रां प्राप्तवतो विशेषाहंकारः स्वत एव संकुचति, विनैव तन्द्रां तथा विस्मरणे प्रयतमानस्याहंकारसंकोचो भवति । सेयं लोकप्रसिद्धया तन्द्रया तार्किकाभिमतनिर्विकल्पकज्ञानेन च समाना महत्तत्त्वमात्रपरिशेषावस्था तृतीया भूमिः । अस्यां चाभ्यासपाटवेन वशीकृतायां तमेतं सामान्याहंकाररूपं महान्तमात्मानं निरुपाधितया शान्ते चिदेकरसस्वभावे नियच्छेत् ।

'महत्तत्त्वं तिरस्कृत्य चिन्मात्रं परिशेषयेत् ।'

अत्रापि पूर्वोक्तविस्मृतिप्रयत्न एव ततोऽप्यतिशयेनोपायतामापद्यते। यथा शास्त्राभ्यासप्रवृत्तस्य व्युत्पत्तेः प्राक्-प्रतिग्रन्थव्याख्यानापेक्षायामपि व्युत्पन्नस्य स्वत एवोत्तरग्रन्थार्थः प्रतिभाति, तथा सम्यग्वशीकृतपूर्वभूमेर्योगिन उत्तरभूम्युपायः स्वत एव प्रतिभाति। तदाह योगभाष्यकारः—

'योगेन योगो ज्ञातव्यो योगो योगात् प्रवर्तते।
योऽप्रमत्तस्तु योगेन स योगी रमते चिरम्॥' इति।

ननु महत्तत्त्वशान्तात्मनोर्मध्ये महत्तत्त्वोपादानमव्यक्ताख्यं तत्त्वं श्रुत्योदाहृतम्। तत्र कुतो नियमनं नाभिधीयत इति चेन्न; लयप्रसङ्गादिति ब्रूमः। यथा घटोऽनुपादाने जले निरुध्यमानो न लीयते उपादानभूतायां तु मृदि लीयते; तथा महत्तत्त्वमात्मनि न लीयते, अव्यक्ते तु लीयते। न च स्वरूपलयः पुरुषार्थः, आत्मदर्शनानुपयोगात्। 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' इति पूर्ववाक्ये आत्मदर्शनं विधाय सूक्ष्मत्वसिद्ध्ये निरोधस्याभिधानात्, लयस्य प्रतिदिनं सुषुप्तौ स्वतः सिद्धत्वेन प्रयत्नवैयर्थ्याच्च। ननु धारणाध्यानसमाधिभिः साध्यस्य संप्रज्ञातस्यैकाग्र्यवृत्तिरूपत्वेन दर्शनहेतुत्वेऽपि शान्तात्मन्यवरुद्धस्यासंप्रज्ञातसमाधिमापन्नस्य चित्तस्य वृत्तिरहितत्वेन सुषुप्तिवन्न दर्शनहेतुत्वमिति चेन्न, स्वतः सिद्धस्य दर्शनस्य निवारयितुमशक्यत्वात्। अत एव श्रेयोमार्गेऽभिहितम्—

'आत्मानात्माकारं स्वभावतोऽवस्थितं सदा चित्तम्।
आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीत॥'

इति।

यथा घट उत्पद्यमानः स्वतो वियत्पूर्ण एवोत्पद्यते, जलतण्डुलादिपूरणं तूत्पन्ने घटे पश्चात् पुरुषप्रयत्नेन भवति; यथा तत्र जलादौ निःसारितेऽपि न वियन्निःसारयितुं शक्यते, मुखपिधानेऽप्यन्तर्वियदवतिष्ठत एव ; तथा चित्तमुत्पद्यमानमात्मचैतन्यपूर्णमेवोत्पद्यते । उत्पन्ने चित्ते पश्चान्मूषानिषिक्तद्रुतताम्रवद्घटपटरूपरससुखदुःखादिवृत्तिरूपत्वं भोगहेतुधर्माधर्मादिवशाद् भवति । तत्र रूपरसाद्यनात्माकारे निवारितेऽपि निर्निमित्तश्चिदाकारो न निवारयितुं शक्यते । ततो निरोधसमाधिना निर्वृत्तिकेन संस्कारमात्रशेषतया सूक्ष्मेण चिदात्ममात्राभिमुखत्वादेकाग्रेण चित्तेन निर्विघ्नमात्माऽनुभूयते । अनेनैवाभिप्रायेण वार्त्तिककारसर्वानुभवयोगिनावाहतुः–

'सुखदुःखादिरूपित्वं धियो धर्मादिहेतुतः ।
निर्हेतुत्वात्मसंबोधरूपत्वं वस्तुवृत्तितः ।।
प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् ।
असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः ।।' इति ।

आत्मदर्शनस्य स्वतःसिद्धत्वेऽप्यनात्मदर्शनवारणाय निरोधाभ्यासः । अत एवोक्तम्–

'आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तियेत् ।'
(भ. गी. ६. २५) इति ।

योगशास्त्रस्य चित्तचिकित्सकसमाधिमात्रे प्रवृत्तत्वान्निरोधसमाधावात्मदर्शनं तत्र न साक्षादुक्तम् । भङ्ग्यन्तरेण त्वभ्युपगम्यते, 'योगश्चित्तवृत्तिनिरोधः' (१. २) इति सूत्रयित्वा 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' (१. ३) इति सूत्रणात्,।

यद्यपि निर्विकारो द्रष्टा सदा स्वरूप एवावतिष्ठते, तथापि वृत्तिषूत्पद्यमानासु तत्र चिच्छायायां प्रतिबिम्बितायां तदविवेकादस्वस्थ इव द्रष्टा भवति। तदप्यनन्तरसूत्रेणोक्तम्—'वृत्तिसारूप्यमितरत्र' (१. ४,) इति। अन्यत्रापि सूत्रितम्—'सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात्' (३. ३६) इति, 'चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्' (४. २२) इति च। निरोधसमाधिना शोधिते त्वंपदार्थे साक्षात्कृतेऽपि तस्य ब्रह्मत्वं गोचरयितुं महावाक्येन ब्रह्मविद्यानामकं वृत्त्यन्तरमुत्पद्यते; न च शुद्धत्वंपदार्थसाक्षात्कारे निरोधसमाधिरेक एवोपायः; किं तु चिज्जडविवेकेनापि पृथक्कृते तत्र साक्षात्कारसंभवात्। अत एव वसिष्ठ आह—

'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव।
योगस्तद्वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम्॥'
(ल. वा. २७. ७२) इति,

'असाध्यः कस्यचिद्योगः कस्यचिज्ज्ञाननिश्चयः।
प्रकारौ द्वौ ततो देवो जगाद परमेश्वरः॥'
(ल. वा. २६. ६०) इति च।

ननु विवेकोऽपि योगे पर्यवस्यति, दर्शनवेलायामात्ममात्रगोचराया एकाग्रवृत्तेः क्षणिकसंप्रज्ञातरूपत्वात्। बाढम्। तथापि संप्रज्ञातासंप्रज्ञातयोः स्वरूपतः साधनतश्चास्त्येव महद्वैलक्षण्यम्। वृत्त्यवृत्तिभ्यां स्फुटः स्वरूपभेदः। साधनं तु संप्रज्ञातस्य सजातीयत्वाद्धारणादित्रयमन्तरङ्गम्, असंप्रज्ञातस्य त्ववृत्तिकस्य विजातीयत्वाद्बहिरङ्गम्। तथा च सूत्रम्—'तदपि बहिरङ्गं

निर्बीजस्य' (३. ८) इति। विजातीयत्वेऽपि बहुविधानात्मवृत्तिनिवारणेनोपकारितया बहिरङ्गत्वमविरुद्धम्। तदेवोपकारित्वं विशदयितुं सूत्रयति—'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्' (१. २०) इति। केषांचिद्देवादीनां पूर्वसूत्रे जन्मनैव समाधिमुक्त्वा मनुष्यान् प्रत्येतदुच्यते। ममायं योग एव परमपुरुषार्थसाधनमिति प्रत्ययः श्रद्धा। सा चोत्कर्षश्रवणेनोपजायते। तदुत्कर्षश्च स्मर्यते—

'तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन॥'
(भ. गी. ६. ४६) इति।

उत्तमलोकसाधनत्वात् कृच्छ्रचान्द्रायणादितपसो ज्योतिष्टोमादिकर्मणश्च योगोऽधिकः। ज्ञानं प्रत्यन्तरङ्गत्वाच्चित्तविश्रान्तिहेतुतया च ज्ञानादप्यधिकः। एवं जानतो योगे श्रद्धा जायते। तस्यां च श्रद्धायां वासितायां वीर्यमुत्साहो भवति—सर्वथा योगं संपादयिष्यामीति। एतादृशेनोत्साहेन तदा तदानुष्ठेयानि योगाङ्गानि स्मर्यन्ते। तया च स्मृत्या सम्यगनुष्ठितसमाधेरध्यात्मप्रसादे सत्यृतंभरा प्रज्ञोदेति। तत्प्रज्ञापूर्वकस्तत्प्रज्ञाकारणकोऽसंप्रज्ञातसमाधिरितरेषां देवादिभ्योऽर्वाचीनानां मनुष्याणां सिध्यति। तां च प्रज्ञां सूत्रयति—'ऋतंभरा तत्र प्रज्ञा' (१. ४८) इति। ऋतं सत्यं वस्तुयाथात्म्यं बिभर्ति प्रकाशयतीति ऋतंभरा। तत्र तस्मिन् समाध्युत्कर्षजन्येऽध्यात्मप्रसादे सतीत्यर्थः। ऋतंभरत्वोपपत्तिं सूत्रयति—'श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात्' (१. ४९) इति। सूक्ष्मव्यवहितविप्रकृष्टवस्तुष्वयोगिप्रत्यक्षं न

प्रवर्तते । आगमानुमानाभ्यां तानि वस्तून्ययोगिभिर्ज्ञायन्ते । ते च शास्त्रानुमानजन्ये प्रज्ञे वस्तुसामान्यमेव गोचरयतः । इदं तु योगिप्रत्यक्षं वस्तुविशेषगोचरत्वादृतंभरम् । तस्य च योगिप्रत्यक्षस्यासंप्रज्ञातसमाधौ बहिरङ्गत्वसिद्ध्यर्थमुपकारित्वं सूत्रयति– 'तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी' (१. ५०) इति । असंप्रज्ञातसमाधेर्बहिरङ्गसाधनमुक्त्वा तन्निरोधप्रयत्नस्यान्तरङ्गसाधनतां सूत्रयति–'तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः' (१. ५१) इति । सोऽयं समाधिः सुषुप्तिसमानः साक्षिचैतन्येनानुभवितुं शक्यः । न चासौ सर्वधीवृत्तिराहित्यात् सुषुप्तिरेवेति शङ्कनीयम्, मनःस्वरूपस्य सदसत्त्वाभ्यां विशेषात् । तदुक्तं गौडपादाचार्यैः–

'निगृहीतस्य मनसो निर्विकल्पस्य धीमतः ।
प्रचारः स तु विज्ञेयः सुषुप्तेऽन्यो न तत्समः ।।
लीयते हि सुषुप्तौ तन्निगृहीतं न लीयते ।
तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ।।'

(३. ३४, ३५) इति,

'द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः ।
बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ।।
स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया ।
न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ।।
अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः ।
विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ।।'

(१. १३–५) इति च ।

आद्यौ विश्वतैजसौ । अद्वैतस्य वस्तुनोऽन्यथाग्रहणं नाम द्वैतरूपेण प्रतिभास: । स च विश्वतैजसयोर्वर्तमान: स्वप्न इत्युच्यते । तत्त्वस्याज्ञानं निद्रा । सा च विश्वतैजसप्राज्ञेषु वर्तते । तयो: स्वप्ननिद्रयो: स्वरूपभूतयोर्विपर्यासो मिथ्याज्ञानम् । तस्मिन् विद्यया क्षीणे सति तुरीयं पदमद्वैतं वस्त्वश्नुतेऽनुभवतीत्यर्थ: । नन्वस्त्वेवमसंप्रज्ञातसमाधिसुषुप्त्योर्महान्भेद: ; तत्र तत्त्वदिदृक्षोर्दर्शनसाधनत्वेन समाध्यपेक्षायामपि दृष्टतत्त्वस्य जीवन्मुक्तये नास्ति तदपेक्षा, रागद्वेषादिक्लेशबन्धस्य सुषुप्त्यापि निवृत्ते: । मैवम् । किं प्रतिदिनं स्वत: प्राप्ता कादाचित्की सुषुप्तिर्बन्धनिर्वर्तिका, किं वाभ्यासेन निरन्तरवर्तिनी ? आद्येऽपि किं सुषुप्तिकालीनस्य क्लेशबन्धस्य निवृत्ति:, किं वा कालान्तरवर्तिन: ? नाद्य:, अप्रसक्ते: । न हि मूढानामपि सुषुप्तौ क्लेशबन्ध: ; अन्यथायास: प्रसज्येत । न द्वितीय:, असंभवात् । न ह्यन्यकालीनया सुषुप्त्या कालान्तरवर्तिन: क्लेशस्य क्षय: संभवति ; अन्यथा मूढानामपि जागरणस्वप्नयो: क्लेशस्य क्षय: प्रसज्येत । नापि सुषुप्तौ नैरन्तर्यमभ्यसितुं शक्यम्, तस्या: कर्मक्षयनिमित्तत्वात् । तस्मात् तत्त्वविदोऽपि, क्लेशक्षयायास्त्येवासंप्रज्ञातसमाध्यपेक्षा । तस्य च समाधेर्गवाश्वादिष्विव वाङ्निरोध: प्रथमा भूमि: । बालमूढादिष्विव निर्मनस्त्वं द्वितीया । तन्द्रायामिवाहंकारराहित्यं तृतीया । सुषुप्ताविव महत्तत्त्वराहित्यं चतुर्थी । तदेतद् भूमिचतुष्टयमभिप्रेत्य 'शनै: शनैरुपरमेत्' इत्युक्तम् । अत्र चोपरमे धृतिगृहीता बुद्धि: साधनम् । महदहंकारमनोवागादीनां स्वत एव तीव्रवेगेण बहि: प्रवहतां कूलंकषाया नद्या इव निरोधे धैर्यं महदपेक्षितम् । बुद्धिर्विवेक: । पूर्वा भूमिर्जिता वा न वेति परीक्ष्य जितायामुत्तर-

भूम्युपक्रमः ; अजितायां तु सैव पुनरभ्यसनीयेति तदा तदा विविञ्च्यात् । 'आत्मसंस्थम्–' इत्यादिना सार्धश्लोकेन चतुर्थभूम्यभ्यासोऽपि स्मृतः । गौडपादाचार्या आहुः–

'उपायेन निगृह्णीयाद् विक्षिप्तं कामभोगयोः ।
सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥
दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् ।
अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥
लये संबोधयेच्चित्तं विक्षिप्तं शमयेत् पुनः ।
सकषायं विजानीयात् समप्राप्तं न चालयेत् ॥
नास्वादयेत् सुखं तत्र निःसङ्गः प्रज्ञया भवेत् ।
निश्चलं निश्चरच्चित्तमेकीकुर्यात् प्रयत्नतः ॥
यदा न लीयते चित्तं न च विक्षिप्यते पुनः ।
अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥'

(३. ४२–६) इति ।

लयविक्षेपकषायसमप्राप्तयश्चतस्रश्चित्तस्यावस्थाः । तत्र निरुध्यमानं चित्तं विषयेभ्यो व्यावृत्तं सत्पूर्वाभ्यासवशाद्यदि लयाय सुषुप्तयेऽभिमुखं भवेत्, तदानीमुत्थापनप्रयत्नेन लयकारणनिवारणेन वा तच्चित्तं सम्यक्प्रबोधयेत् । लयहेतवो निद्राशेषाजीर्णबह्वशनश्रमाः । अत एवाहुः–

'समापय्य निद्रां सुजीर्णाल्पभोजी
श्रमत्याग्यबाधे विविक्ते प्रदेशे ।
सदासीत निस्तृष्ण एवाप्रयत्नो-
ऽथ वा प्राणरोधी निजाभ्यासमार्गात् ॥' इति ।

लयादुत्थापितं चित्तं दैनंदिनप्रबोधाभ्यासवशाद्यदि कामभोगयोर्विक्षिप्येत, तदा विवेकिजनप्रसिद्धभोग्यवस्तुगतसर्वदुःखानुस्मरणेन शास्त्रप्रसिद्धजन्मादिरहिताद्वितीयब्रह्मतत्त्वानुस्मरणपूर्वकेण भोग्यवस्तुदर्शनेन च पुनः पुनर्विक्षेपाच्चित्तं शमयेत् । कषायस्तीव्रश्चित्तदोषः । तीव्ररागद्वेषादिवासनया ग्रस्तं चित्तं कदाचित् समाहितमिव लयविक्षेपरहितं दुःखैकाग्रमवतिष्ठते; तादृशं तच्चित्तं विजानीयात्, समाहितचित्ताद्विवेकेनावगच्छेत् । असमाहितमेतदित्यवगम्य लयविक्षेपवत् कषायस्य प्रतीकारं कुर्यात् । समशब्देन ब्रह्माभिधीयते ।

'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।

(भ. गी. १३. २८) इति स्मृतेः ।

लयविक्षेपकषायेषु परिहृतेषु परिशेषाच्चित्तेन समं ब्रह्म प्राप्यते । तच्च समप्राप्तं चित्तं लयकषायभ्रान्त्या न चालयेत् । सूक्ष्मया बुद्ध्या लयकषायप्राप्ती विविच्य तस्यां समप्राप्तावतिप्रयत्नेन चिरं स्थापयेत् । स्थापिते तस्मिन् ब्रह्मस्वरूपभूतः परमानन्दः सम्यगाविर्भवति । तथा चोदाहृतम्–

'सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।'

(भ. गी. ६. २१.) इति ।

श्रुतिश्च भवति–

'समाधिनिर्धूतमलस्य चेतसो
निवेशितस्यात्मनि यत्सुखं भवेत् ।

न शक्यते वर्णयितुं गिरा तदा
स्वयं तदन्तःकरणेन गृह्यते ।। '

(मै. उ. ४. ९) इति ।

ननु समाध्याविर्भूतस्य ब्रह्मानन्दस्य बुद्धिग्राह्यत्वं श्रुतिस्मृतिभ्यामभिहितम् ; आचार्यैस्तु–'नास्वादयेत् सुखं तत्र' इति बुद्धिग्राह्यत्वं प्रतिषिध्यत इति चेत् । नायं दोषः । तत्र निरोधसुखं बुद्धिग्राह्यं न प्रतिषिध्यते, किं तु समाधिविरोधिनो व्युत्थानरूपस्य परामर्शस्यैव प्रतिषेधात् । यथा निदाघदिवसेषु मध्याह्ने जाह्नवीह्रदनिमग्नेनानुभूयमानमपि शैत्यसुखं तदा वक्तुमशक्यं पश्चादुन्मग्नेनाभिधीयते; यथा वा सुषुप्तावविद्यावृत्तिभिरतिसूक्ष्माभिरनुभूयमानमपि स्वरूपसुखं तदानीं सविकल्पकेनान्तःकरणवृत्तिज्ञानेन ग्रहीतुमशक्यम्, प्रबोधकाले तु स्मृत्या विस्पष्टं परामृश्यते ; तथा समाधौ वृत्तिरहितेन संस्कारमात्रशेषतया सूक्ष्मेण वा चित्तेन सुखानुभवः श्रुतिस्मृत्योर्विवक्षितः । 'महदिदं समाधिसुखमन्वभूवम्' इत्येतादृशो व्युत्थितस्य सविकल्पकः परामर्शोऽत्रास्वादनम्; तदेवाचार्यैः प्रतिषिध्यते। तमेव स्वाभिप्रायं प्रकटयितुम् 'निःसङ्गः प्रज्ञया भवेत्' इत्युक्तम् । प्रकृष्टं सविकल्पकं ज्ञानं प्रज्ञा ; तया सह सङ्गं परित्यजेत् । यद्वा पूर्वोक्ता धृतिगृहीता बुद्धिः प्रज्ञा ; तदात्मकेन साधनेन सुखास्वादनतद्वर्णनादिरूपामासक्तिं वर्जयेत् । समाधौ ब्रह्मानन्दे निमग्नं चित्तं यदि कदाचित्सुखास्वादनाय वा शीतवातमशकाद्युपद्रवेण वा निश्चरेत् तदा निश्चरत्तच्चित्तं पुनः पुनर्निश्चलं यथा भवति तथा परब्रह्मणा सहैकीकुर्यात् । तत्र च निरोधप्रयत्न

एव साधनम् । एकीभाव एव 'यदा न लीयते चित्तम्' इत्यनेन श्लोकेन स्पष्टीक्रियते । 'अनिङ्गनमनाभासम्' इत्याभ्यां पदाभ्यां कषायसुखास्वादौ द्वौ च प्रतिषिध्येते । लयविक्षेपकषायसुखास्वादेभ्यो विनिर्मुक्तं चित्तमविच्छेदेन ब्रह्मण्यवस्थितं भवति । एतदेवाभिप्रेत्य कठवल्लीषु पठ्यते–

'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ।।
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ।।'

(कठ. उ. २. ३. १०, ११) इति ।

उपेक्षितो योग इन्द्रियवृत्तीनां प्रभवं करोति। अनुष्ठितस्तु तासां लयहेतुः । अत एव योगस्य स्वरूपलक्षणं सूत्रयति– 'योगश्चित्तवृत्तिनिरोधः' (१. २.) इति । वृत्तीनामानन्त्यान्निरोधोऽशक्य इति शङ्कां वारयितुमियत्तां सूत्रयति–'वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः' (१. ५) इति । रागद्वेषादिक्लेशरूपा आसुरवृत्तयः क्लिष्टाः । रागादिरहिता दैववृत्तयोऽक्लिष्टाः । यद्यपि पञ्चस्वेव क्लिष्टानामक्लिष्टानां चान्तर्भावः, तथापि क्लिष्टा एव निरोद्धव्या इति मन्दबुद्धिं वारयितुं ताभिः सहाक्लिष्टा अप्युदाहृताः । नामधेयलक्षणाभ्यां ता वृत्तीर्विशदयितुं सूत्रषट्कमाह–'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' (१. ६) 'प्रत्यक्षानुमानागमाः प्रमाणानि' (१. ७,) 'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' (१. ८,) 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः' (१. ९,) 'अभावप्रत्ययालम्बना वृत्तिर्निद्रा'

(१. १०,) ‘ अनुभूतविषयासंप्रमोषः स्मृतिः ’ (१. ११) इति । वस्त्वभावः प्रतीयते यस्मिस्तमस्यावरके सति तत्तमोऽभाव-प्रत्ययः । तमोगुणं विषयीकुर्वती वृत्तिर्निद्रेत्युच्यते । अनुभूत-विषयस्यासंप्रमोषस्तदनुभवजन्यमनुसंधानम् । पञ्चविधवृत्ति-निरोधसाधनं सूत्रयति—‘ अभ्यासवैराग्याभ्यां तन्निरोधः ’ (१. १२) इति । यथा तीव्रवेगोपेतं नदीप्रवाहं सेतुबन्धनेन निवार्य कुल्याप्रणयनेन क्षेत्राभिमुखं तिर्यक्प्रवाहान्तरमुत्पाद्यते, तथा वैराग्येण चित्तनद्या विषयप्रवाहं निवार्य समाध्यभ्यासेन प्रशान्तः प्रवाहः संपाद्यते। मन्त्रजपदेवताध्यानादीनां क्रियारूपत्वेनावृत्ति-लक्षणोऽभ्यासः संभाव्यते । सर्वव्यापारोपरमरूपस्य समाधेः साधकः को नामाभ्यास इति शङ्कां वारयितुं सूत्रयति—‘ तत्र स्थितौ यत्नोऽभ्यासः ’ (१. १३) इति । स्थितिर्नैश्चल्यं निरोधः । यत्नो मानस उत्साहः । स्वत एव बहिष्प्रवाहशीलं चित्तं सर्वथा निरोधयिष्यामीत्येवंविध उत्साह आवर्त्यमानोऽभ्यास इत्युच्यते। अयमभ्यास इदानीं प्रवृत्तः स्वयमदृढः सन्ननादिप्रवृत्ता व्युत्थानवासनाः कथमभिभवेदित्याशङ्कामपवदितुं सूत्रयति—‘स तु दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमिः’ (१. १४) इति । लोका हि मूढस्य वचनमुदाहरन्ति ‘विद्यमानाश्चत्वार एव वेदाः, तानध्येतुं गतस्य माणवकस्य पञ्च दिवसा अतीताः, अद्याप्यसौ नागतः’ इति । तादृश एवायं योगी तदा स्याद् यदा दिवसैर्वा मासैर्वा योगसिद्धिं वाञ्छेत् । तस्मात् संवत्सरैर्जन्मभिर्वा दीर्घकालं योग आसेवितव्यः । तथा च स्मर्यते—

‘ अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ।। ’

(भ. गी. ६. ४५) इति ।

चिरमासेव्यमानोऽपि यदि विच्छिद्य विच्छिद्य सेव्येत, तर्ह्युत्पद्यमानानां योगसंस्काराणां समनन्तरभाविभिर्विच्छेदकारिभिर्व्युत्थानकालीनैः संस्कारैरभिभवे सति खण्डनकारोक्तन्याय आपतेत् –[1] 'अग्रे धावन्पश्चाल्लुप्यमानो विस्मरणशीलश्रुतवत्किमालम्बेत' इति । तस्मान्निरन्तरमासेवितव्यः । सत्कार, आदरः । अनादरेण सेव्यमाने वसिष्ठोक्तन्याय आपतेत्–

'अकर्तृ कुर्वदप्येतच्चेतश्चेत्क्षीणवासनम् ।
दूरं गतमना जन्तुः कथासंश्रवणे यथा ।।' इति ।

अनादरो लयविक्षेपकषायसुखास्वादानामपरिहारः । तस्मादादरेण सेवितव्यः । दीर्घकालादित्रैविध्येन सेवितस्य समाधेर्दृढभूमित्वं नाम विषयसुखवासनया दुःखवासनया वा चालयितुमशक्यत्वम् । तच्च भगवता दर्शितम्–

'यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ।।'
(भ. गी. ६. २२) इति ।

अपरलाभस्यानाधिक्यं कचवृत्तान्तेन वसिष्ठ उदाजहार–

'कचः कदाचिदुत्थाय समाधेः प्रीतमानसः ।
एकान्ते समुवाचेदमेवं गद्गदया गिरा ।।
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
आत्मना पूरितं विश्वं महाकल्पाम्बुना यथा ।।
सबाह्याभ्यन्तरे देहे ह्यध ऊर्ध्वं च दिक्षु च ।
इत आत्मा तथेहात्मा नास्त्यनात्ममयं क्वचित् ।।

[1] पृ० २०५, चौखम्बामुद्रिते खण्डनखण्डखाद्ये ।

न तदस्ति न यत्राहं न तदस्ति न यन्मयि ।
किमन्यदभिवाञ्छामि सर्वं संविन्मयं ततम्।

(ल. वा. १८. ३७–४०)

स्फारब्रह्मामलाम्भोधेः फेनाः सर्वे कुलाचलाः ।
चिदादित्यमहातेजोमृगतृष्णा जगच्छ्रियः ॥'

(ल. वा. १८. ३५) इति ।

[1]गुरुदुःखेनाप्यविचाल्यत्वं शिखिध्वजस्य वत्सरत्रयसमाधिवृत्तान्तेनोदाजहार–

'निर्विकल्पसमाधिस्थं तत्रापश्यन्महीपतिम् ।
राजानं तावदेतस्माद् बोधयामि परात्पदात् ॥ १२२ ॥
इति संचिन्त्य चूडाला सिंहनादं चकार सा ।
भूयो भूयः प्रभोरग्रे वनेचरभयप्रदम् ॥ १२३ ॥
न चचाल तदा राम यदा नादेन तेन सः ।
भूयो भूयः कृतेनापि तदा सा तं व्यचालयत् ॥ १२४ ॥
चालितः पातितोऽप्येष तदा नो बुबुधे बुधः' ॥ १२५ ॥

इति ।

प्रह्लादवृत्तान्तेनाप्येतदेवोदाजहार–

'इति संचिन्तयन्नेव प्रह्लादः परवीरहा ।
निर्विकल्पपरानन्दसमाधिं समुपाययौ ॥

(ल. वा. २२. ६२)

[1] ल० यो० सर्गः ३७ ।

निर्विकल्पसमाधिस्थश्चित्रार्पित इवाबभौ ।
पञ्च वर्षसहस्राणि पीनाङ्गोऽतिष्ठदेकदृक् ।।
(ल. वा. २२. ६३)

महात्मन् संप्रबुध्यस्वेत्येवं विष्णुरुदाहरत् ।
पाञ्चजन्यं प्रदध्मौ च ध्वनयन् ककुभां गणम् ।।
(ल. वा. २२. १०६)

महता तेन शब्देन वैष्णवप्राणजन्मना ।
बभूव संप्रबुद्धात्मा दानवेश: शनै: शनै: ।। '
(ल. वा. २२. १०७) इति ।

एवं वीतहव्यादीनामपि समाधिरुदाहरणीय: । वैराग्यं द्विविधम्, अपरं परं चेति । यतमानव्यतिरेकैकेन्द्रियवशीकारभेदैरपरं चतुर्विधम् । तत्राद्यं त्रयमर्थात्सूत्रयन्साक्षाच्चतुर्थं सूत्रयति– 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्' (१ १५) इति । स्रक्चन्दनवनितापुत्रमित्रक्षेत्रधनादयो दृष्टा: । वेदोक्ता: स्वर्गादय आनुश्रविका: । तत्रोभयत्र सत्यामपि तृष्णायां विवेकतारतम्येन यतमानादिवैराग्यत्रयं भवति । अस्मिञ्जगति किं सारं किमसारमिति गुरुशास्त्राभ्यां ज्ञास्यामीत्युद्योगो यतमानत्वम् (१), स्वचित्ते पूर्वं विद्यमानानां दोषाणां मध्येऽभ्यस्यमानेन विवेकेनैतावन्त: पक्वा एतावन्तोऽवशिष्टा इति विवेचनं व्यतिरेक: (२), दृष्टानुश्रविकविषयप्रवृत्तेर्दु:खात्मत्वबोधेन तां प्रवृत्तिं परित्यज्य मनसश्चौत्सुक्यमात्रेण वितृष्णावस्थानमेकेन्द्रियत्वम् (३), वितृष्णत्वं वशीकार: (४), तदिदमपरं वैराग्यमष्टाङ्गयोगप्रवर्तकत्वेन संप्रज्ञातस्यान्तरङ्गम्,

असंप्रज्ञातस्य तु बहिरङ्गम् । तत्रान्तरङ्गं परं वैराग्यं सूत्रयति–'तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्' (१. १६) इति । संप्रज्ञातसमाधिपाटवेन गुणत्रयात्मकात्प्रधानाद्विरक्तस्य पुरुषस्य ख्यातिः साक्षात्कार उत्पद्यते । तस्माच्च साक्षात्कारादशेषगुणत्रयव्यवहारे यद्वैतृष्ण्यं तत्परं वैराग्यम् । तस्य तारतम्येन समाधेः शीघ्रत्वतारतम्यं सूत्रयति–'तीव्रसंवेगानामासन्नः समाधिलाभः' (१. २०) इति । संवेगो वैराग्यम् । तद्भेदाद्योगिनस्त्रिविधाः–मृदुसंवेगा मध्यसंवेगास्तीव्रसंवेगाश्चेति । आसन्नोऽल्पेनैव कालेन समाधिर्लभ्यत इत्यर्थः । तीव्रसंवेगेष्वेव समाधितारतम्यं सूत्रयति–'मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः' (१. २१) इति । मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति । तेष्वप्युत्तरोत्तरस्य त्वरया सिद्धिर्द्रष्टव्या । उत्तमोत्तमा जनकप्रह्लादादयोऽधिमात्रतीव्राः, मुहूर्तमात्रविचारेण दृढसमाधिलाभात् । अधमाधमा उद्दालकादयो मृदुसंवेगाः, चिरप्रयासेन तल्लाभात् । एवमन्येऽपि यथायोगमुन्नेयाः । तदेवमधिमात्रतीव्रस्य दृढभूमावसंप्रज्ञातसमाधौ लब्धे सति पुनर्व्युत्थातुमशक्तं सन्मनो नश्यति । मनोनाशेन च वासनाक्षये रक्षिते सति जीवन्मुक्तिः सुप्रतिष्ठिता भवति । न च मनोनाशेन विदेहमुक्तिरेव न तु जीवन्मुक्तिरिति शङ्कनीयम्, प्रश्नोत्तराभ्यां तन्निर्णयात् ।

श्रीरामः–

'विवेकाभ्युदयाच्चित्तस्वरूपेऽन्तर्हिते मुने ।
मैत्र्यादयो गुणाः कुत्र जायन्ते योगिनां वद ॥'

(ल. वा. २८. १५)

वसिष्ठः—

'द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च ।
जीवन्मुक्तौ सरूपः स्यादरूपोऽदेहमुक्तिगः ।।
(ल. वा. १८. १६)

प्राकृतं गुणसंभारं ममेति बहु मन्यते ।
सुखदुःखाद्यवष्टभ्य विद्यमानं मनो विदुः ।।
(ल. वा. २८. १८)

चेतसः कथिता सत्ता मया रघुकुलोद्वह ।
अस्य नाशमिदानीं त्वं श्रृणु प्रश्नविदां वर ।।
(ल. वा. २८. २०)

सुखदुःखदशा धीरं साम्यान्न प्रोद्धरन्ति यम् ।
निःश्वासा इव शैलेन्द्रं तस्य चित्तं मृतं विदुः ।।
(ल. वा. २८. २१)

आपत्कार्पण्यमुत्साहो मदो मान्द्यं महोत्सवः ।
यं नयन्ति न वैरूप्यं तस्य नष्टं मनो विदुः ।।
(ल. वा. २८. २२)

चित्तमाशानिधानं हि यदा नश्यति राघव ।
मैत्र्यादिभिर्गुणैर्युक्तं तदा सत्त्वमुदेत्यलम् ।
भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ।।
(ल. वा. २८. २३, २४)

सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते ।
(ल. वा. २८. २५)

अरूपस्तु मनोनाशो यो मयोक्तो रघूद्वह ।
विदेहमुक्तावेवासौ विद्यते निष्कलात्मकः ।।
(ल. वा. २८. २६)

समग्राग्र्यगुणाधारमपि सत्त्वं प्रलीयते ।
विदेहमुक्तावमले पदे परमपावने ।।
(ल. वा. २८. २७)

संशान्तदुःखमजडात्मकमेकरूप-
मानन्दमन्थरमपेतरजस्तमो यत् ।
आकाशकोशतनवोऽतनवो महान्त-
स्तस्मिन् पदे गलितचित्तलवा वसन्ति ।। '
(ल. वा. २८. ३२.) इति ।

' जीवन्मुक्ता न मुह्यन्ति सुखदुःखरसस्थितौ ।
प्राकृतेनार्थकारेण किंचित् कुर्वन्ति वा न वा ।। '

तस्मात् सरूपो मनोनाशो जीवन्मुक्तिसाधनमिति स्थितम् ।।

**इति श्रीमद्विद्यारण्यप्रणीते जीवन्मुक्तिविवेके मनोनाशनिरूपणं नाम तृतीयं प्रकरणम् ।। ३ ।।**

---

## चतुर्थं स्वरूपसिद्धिप्रयोजनप्रकरणम् ।

केयं जीवन्मुक्तिः, किं वा तत्र प्रमाणम्, कथं वा तत्सिद्धिः, इत्येतस्य प्रश्नत्रयस्योत्तरं निरूपितम् । सिद्ध्या वा किं प्रयोजनमित्यस्य चतुर्थप्रश्नस्योत्तरमिदानीमभिधीयते–ज्ञानरक्षातपोविसंवादाभावदुःखनाशसुखाविर्भावाः सन्ति पञ्च प्रयोजनानि । ननु प्रमाणोत्पन्नस्य तत्त्वज्ञानस्य को नाम बाधप्रसङ्गो येन रक्षा अपेक्ष्यत इति चेदुच्यते । चित्तविश्रान्त्यभावे संशयविपर्ययौ प्रसज्येयाताम् । तथा हि–तत्त्वविदो राघवस्य विश्रान्तेः पूर्वं संशयं विश्वामित्र उदाजहार–

'न राघव तवास्त्यन्यज्ज्ञेयं ज्ञानवतां वर ।
त्वयैव सूक्ष्मया बुद्ध्या सर्वं विज्ञातवानसि ।।
भगवद्व्यासपुत्रस्य शुकस्येव मतिस्तव ।
विश्रान्तिमात्रमेवात्र ज्ञातज्ञेयाप्यपेक्षते ।। '

(ल. वा. ३. १७, १८) इति ।

शुकस्तु स्वयमेवादौ तत्त्वं विदित्वा तत्र संशयानः पितरं पृष्ट्वा पित्रापि तथैवानुशिष्टस्तत्रापि संशयानो जनकमुपसद्य तेनापि तथैवानुशिष्टस्तं प्रत्येवमुवाच,

श्रीशुकः–

' स्वयमेव मया पूर्वमेतज्ज्ञातं विवेकतः ।
एतदेव हि पृष्टेन पित्रा मे समुदाहृतम् ।।

भवताप्येष एवार्थः कथितो वाग्विदां वर ।
एष एव च वाक्यार्थः शास्त्रेषु परिदृश्यते ।।
यथायं स्वविकल्पोत्थः स्वविकल्पपरिक्षयात् ।
क्षीयते दग्धसंसारो निःसार इति निश्चयः ।।
तत्किमेतन्महाबाहो सत्यं ब्रूहि ममाचलम् ।
त्वत्तो विश्रान्तिमाप्नोमि चेतसा भ्रामितं जगत् ।।
(ल. वा. ३. ४३–६)

जनकः–

'नातः परतरः कश्चिन्निश्चयोऽस्त्यपरो मुने ।
स्वयमेव त्वया ज्ञातं गुरुतश्च पुनः श्रुतम् ।।
अव्युच्छिन्नश्चिदात्मैकः पुमानस्तीह नेतरः ।
स्वसंकल्पवशाद् बद्धो निःसंकल्पस्तु मुच्यते ।।
मुने त्वया स्फुटं ज्ञातं ज्ञेयं स्वस्य महात्मनः ।
भोगेभ्यो विरतिर्जाता दृश्याद्वा सकलादिह ।।
प्राप्तं प्राप्तव्यमखिलं भवता पूर्णचेतसा ।
न दृश्ये यतसे ब्रह्मन् मुक्तस्त्वं भ्रान्तिमुत्सृज ।।
अनुशिष्टः स इत्येवं जनकेन महात्मना ।
विशश्राम शुकस्तूष्णीं स्वस्थे परमवस्तुनि ।।
वीतशोकभयायासो निरीहश्छिन्नसंशयः ।
जगाम शिखरं मेरोः समाध्यर्थमनिन्दितम् ।।
तत्र वर्षसहस्राणि निर्विकल्पसमाधिना ।
दश स्थित्वा शशामासावात्मन्यस्नेहदीपवत् ।।'
(ल. वा. ३. ४७–५३) इति ।

तस्माद् विदितेऽपि तत्त्वे विश्रान्तिरहितस्य शुकराघवयोरिव संशय उत्पद्यते । स चाज्ञानमिव मोक्षस्य प्रतिबन्धकः । अत एव भगवतोक्तम्–

‘ अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ।। ’
(भ. गी. ४. ४० ) इति ।

अश्रद्धा विपर्ययः । स चोत्तरत्रोदाहरिष्यते । अज्ञानविपर्ययौ मोक्षमात्रविरोधिनौ ; संशयस्तु भोगमोक्षयोरुभयोरपि विरोधी, तस्य परस्परविरुद्धकोटिद्वयावलम्बित्वात् । यदा संसारसुखाय प्रवृत्तिस्तदा मोक्षमार्गे बुद्धिस्तां निरुणद्धि । यदा च मोक्षमार्गे प्रवृत्तिस्तदा संसारबुद्धिस्तां प्रतिबध्नाति । तस्मात् संशयात्मनो न किंचित्सुखमस्तीति मुमुक्षुणा सर्वथा संशयश्छेत्तव्यः । अत एव श्रूयते–‘ छिद्यन्ते सर्वसंशयाः ’ (मु. उ. २. २. ८) इति । विपर्ययस्यापि निदाघ उदाहरणम् । ऋभुः परमकरुणया निदाघस्य गृहमेत्य बहुधा तं बोधयित्वा निर्जगाम । बुद्धेऽपि तदुपदिष्टे वस्तुन्यश्रद्दधानो निदाघः कर्माण्येव परमपुरुषार्थहेतुरिति विपर्ययं प्राप्य कर्मानुष्ठाने यथापूर्वं प्रवृत्तः । सोऽपि शिष्यस्य परमपुरुषार्थभ्रंशो मा भूदिति कृपया गुरुः पुनरागत्य बोधयामास । तदापि विपर्ययं न जहौ । तृतीयेन तु बोधनेन विपर्ययं परित्यज्य विश्रान्तिमलभत । संशयविपर्ययाभ्यामसंभावनाविपरीतभावनारूपाभ्यां तत्त्वज्ञानस्य फलं प्रतिबध्यते । तदुक्तं पराशरेण–

‘ मणिमन्त्रौषधैर्वह्निः सुदीप्तोऽपि यथेन्धनम् ।
प्रदग्धुं नैव शक्तः स्यात् प्रतिबद्धस्तथैव च ।।

ज्ञानाग्निरपि संजातः प्रदीप्तः सुदृढोऽपि च ।
प्रदग्धुं नैव शक्तः स्यात् प्रतिबद्धस्तु कल्मषम् ।।
भावना विपरीता या या चासंभावना शुक ।
कुरुते प्रतिबन्धं सा तत्त्वज्ञानस्य नापरम् ।।
(प. उ. अ. १४) इति ।

तस्मादविश्रान्तचित्तस्य संशयविपर्ययप्रसङ्गेन तत्त्वज्ञानस्य फलप्रतिबन्धलक्षणाद्बाधाद्रक्षापेक्ष्यते । विश्रान्तचित्तस्य तु मनोनाशेन यदा जगदेव प्रविलीयते तदा संशयविपर्यययोः कः प्रसङ्गः? जगत्प्रतिभासरहितस्य ब्रह्मविदो देहव्यवहारोऽपि विनैव स्वप्रयत्नं परमेश्वरप्रेरितेन प्राणवायुना निष्पाद्यते । अत एव छन्दोगा आमनन्ति–' नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्शरीरे प्राणो युक्तः '(छा. उ. ८. १२. ३) इति । उपजनं जनानां समीपे वर्तमानमिदं शरीरं न स्मरन्ब्रह्मविद्वर्तते । पार्श्वस्था जना एव तत्त्वविदः शरीरं पश्यन्ति । स्वयं तु निर्मनस्कत्वान्मदीयमिदं शरीरमिति न स्मरति । प्रयोग्यो रथशकटादिवहने प्रयोक्तुमर्हः शिक्षितोऽश्वबलीवर्दादिः ; स यथा सारथिना मार्गस्याचरणे प्रेरितः पुनः पुनः सारथिप्रयत्नमनपेक्ष्य स्वयमेव रथशकटादिकं पुरोवर्तिग्रामं नयति, एवमेवायं प्राणवायुः परमेश्वरेणास्मिञ्शरीरे नियुक्तः सत्यसति वा जीवप्रयत्ने व्यवहारं निर्वाहयति । भागवतेऽपि स्मर्यते–

' देहं विनश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् ।

दैवादुपेतमथ दैववशादपेतं
वासो यथा परिकृतं मदिरामदान्धः ॥
(भाग. ११. १३. ३६) इति ।

वसिष्ठोऽप्याह—

'पार्श्वस्थबोधिताः सन्तः पूर्वाचारक्रमागतम् ।
आचारमाचरन्त्येव सुप्तबुद्धवदक्षताः ॥'
(ल. वा. १३. १२७) इति ।

सिद्धो न पश्यत्याचारमाचरतीत्युभयोः परस्परविरोध इति चेन्न । विश्रान्तितारतम्येन व्यवस्थोपपत्तेः । तदेव तारतम्यमभिप्रेत्य श्रूयते—'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः' (मु. उ. ३. १. ४.) इति । अत्र चत्वारः प्रतीयन्ते-ब्रह्मवित्प्रथमः, ब्रह्मविद्वरो द्वितीयः, ब्रह्मविद्वरीयांस्तृतीयो ब्रह्मविद्वरिष्ठश्चतुर्थः । त एते सप्तसु योगभूमिषु चतुर्थीं योग-भूमिमारभ्य क्रमेण भूमिचतुष्टयं प्राप्ता इत्यवगन्तव्यम् । भूमयश्च वसिष्टेन दर्शिताः—

'ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता ।
विचारणा द्वितीया स्यात् तृतीया तनुमानसा ॥
सत्त्वापत्तिश्चतुर्थी स्यात् ततोऽसंसक्तिनामिका ।
पदार्थाभाविनी षष्ठी सप्तमी तुर्यगा स्मृता ॥'
(ल. वा. १३. ११३, ११४) इति ।

'स्थितः किं मूढ एवास्मि प्रेक्षेऽहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥

शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ।
सद्विचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥
विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वसक्तता ।
यत्र सा तनुतामेति प्रोच्यते तनुमानसा ॥
भूमिकात्रितयाभ्यासाच्चित्तेऽर्थविरतेर्वशात् ।
सत्त्वात्मनि स्थितिः शुद्धे सत्त्वापत्तिरुदाहृता ॥
दशाचतुष्टयाभ्यासादसंसर्गफला तु या ।
रूढसत्त्वचमत्कारा प्रोक्तासंसक्तिनामिका ॥
भूमिकापञ्चकाभ्यासात् स्वात्मारामतया भृशम् ।
आभ्यन्तराणां बाह्यानां पदार्थानामभासनात् ॥
परप्रयुक्तेन चिरं प्रयत्नेनावबोधनम् ।
पदार्थाभाविनी नाम षष्ठी भवति भूमिका ॥
भूमिषट्कचिराभ्यासाद् भेदस्यानुपलम्भनात् ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा स्थितिः ॥
(ल. वा. १३. ११६–२३) इति ।

अत्र भूमिकात्रितयं ब्रह्मविद्यायाः साधनमेव, न तु विद्याकोटावन्तर्भवति । भूमित्रये भेदसत्यत्वबुद्धेरनिवर्तितत्वात् । अत एवैतज्जागरणमिति व्यपदिश्यते । तदुक्तम्—

'भूमिकात्रितयं त्वेतद् राम जाग्रदिति स्थितम् ।
यथावद् भेदबुद्ध्येदं जगज्जाग्रति दृश्यते ॥' इति ।

ततो वेदान्तवाक्यान्निर्विकल्पको ब्रह्मात्मैक्यसाक्षात्कारश्चतुर्थी भूमिका फलरूपा सत्त्वापत्तिः । चतुर्थभूमौ सर्वजगदुपादानस्य ब्रह्मणो वास्तवमद्वितीयसत्तास्वभावं निश्चित्य ब्रह्म-

ण्यारोपितयोर्जगच्छब्दाभिधेययोर्नामरूपयोर्मिथ्यात्वमवगच्छति । मुमुक्षोः पूर्वोक्तं जागरणमपेक्ष्य सेयं भूमिः स्वप्नः । तदाह–

'अद्वैते स्थैर्यमायाते द्वैते चोपरतिं गते ।
पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकामिताः ।।
चित्तं तु शरदभ्रांशविलयं प्रविलीयते ।
सत्तावशेष एवास्ते चतुर्थीं भूमिकामितः ।। '

(ल. वा. ४३. ७०, ७१)

सोऽयं चतुर्थीं भूमिकां प्राप्तो योगी ब्रह्मविदित्युच्यते । पञ्चम्यादयस्तिस्रो भूमयो जीवन्मुक्तेरवान्तरभेदाः । ते च निर्विकल्पसमाध्यभ्यासकृतेन विश्रान्तितारतम्येन संपद्यन्ते । पञ्चमभूमौ निर्विकल्पकात् स्वयमेव व्युत्तिष्ठते । सोऽयं योगी ब्रह्मविद्वरः । षष्ठभूमौ पार्श्वस्थैर्बोधितो व्युत्तिष्ठते । सोऽयं ब्रह्मविद्वरीयान् । तदेतद् भूमिद्वयं सुषुप्तिर्गाढसुषुप्तिरिति चाभिधीयते । तदाह–

' पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् ।।
शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतममात्रके ।।

(ल. वा. ४३. ७३)

अन्तर्मुखतया नित्यं बहिर्वृत्तिपरोऽपि सन् ।
परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते ।।

(ल. वा. ४३. ७५)

कुर्वन्नभ्यासमेतस्यां भूमिकायां विवासनः ।
षष्ठीं गाढसुषुप्त्याख्यां क्रमात् पतति भूमिकाम् ।।

(ल. वा. ४३. ७६)

यत्र नासन्न सद्रूपो नाहं नाप्यनहंकृतिः ।
केवलं क्षीणमनन आस्ते द्वैतैक्यवर्जितः ।।
(ल. वा. ४३. ७७)

अन्तः शून्यो बहिः शून्यः शून्यः कुम्भ इवाम्बरे ।
अन्तः पूर्णो बहिः पूर्णः पूर्णः कुम्भ इवार्णवे ।। '
(ल. वा. ४३. ७६) इति ।

गाढं निर्विकल्पसमाधिं प्राप्तस्य संस्कारमात्रशेषस्य चित्तस्य मनोराज्यं कर्तुं बाह्यपदार्थान् ग्रहीतुं वा सामर्थ्याभावादाकाशावस्थितकुम्भवदन्तर्बहिःशून्यत्वम् ; स्वयंप्रकाशसच्चिदानन्दैकरसे ब्रह्मणि निमग्नत्वेन बहिश्च सर्वत्र ब्रह्मदृष्टया समुद्रमध्यस्थापितजलपूर्णकुम्भवदन्तर्बहिःपूर्णत्वम् । तुरीयाभिधां सप्तमीं भूमिं प्राप्तस्य योगिनः स्वतः परतो वा व्युत्थानमेव नास्ति । तादृशमेवोद्दिश्य 'देहं विनश्वरमवस्थितमुत्थितं वा' इत्यादिभागवतवाक्यं प्रवृत्तम् । असंप्रज्ञातसमाधिप्रतिपादकानि योगशास्त्राण्यत्रैव पर्यवसितानि । सोऽयमीदृशो योगी पूर्वोदाहृतश्रुतौ ब्रह्मविद्वरिष्ठ इत्युच्यते । तदेवं पार्श्वस्थबोधितः सिद्धो न पश्यतीत्यनयोर्भूमिद्वये व्यवस्थितत्वान्न कोऽपि विरोधः । तत्रायं संग्रहः । पञ्चम्यादिभूमित्रयरूपायां जीवन्मुक्तौ संपाद्यमानायां द्वैतप्रतिभासाभावेन संशयविपर्यप्रसङ्गाभावादुत्पन्नं तत्त्वज्ञानमबाधेन रक्षितं भवति । सेयं ज्ञानरक्षा जीवन्मुक्तेः प्रथमं प्रयोजनम् । तपो द्वितीयं प्रयोजनम् । योगभूमीनां देवत्वादिप्राप्तिहेतुतया तपस्त्वं द्रष्टव्यम् । तद्धेतुत्वं चार्जुनभगवतोः श्रीरामवसिष्ठयोश्च प्रश्नोत्तराभ्यामवगम्यते । अर्जुन उवाच—

' अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ।।
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ।।
एतं मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ।। '

(भ. गी. ६. ३७—९)

भगवानुवाच–

' पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति ।।
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।।
अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ।।
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ।। '

(भ. गी. ६. ४०-३) इति ।

श्रीराम उवाच–

' आद्यामथ द्वितीयां वा तृतीयां भूमिकामुत ।
आरूढस्य मृतस्याथ कीदृशी भगवन् गतिः ।। '

वसिष्ठ उवाच–

' योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः ।
भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ।।

ततः सुरविमानेषु लोकपालपुरेषु च ।
मेरूपवनकुञ्जेषु रमते रमणीसखः ।।
ततः सुकृतसंभारे दुष्कृते च पुरा कृते ।
भोगक्षयपरिक्षीणे जायन्ते योगिनो भुवि ।।
शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् ।
तत्र प्राग्भावनाभ्यस्तं योगभूमित्रयं बुधः ।
पृष्ठोपरि पतत्युच्चैरुत्तरं भूमिकाक्रमम् ।। ' इति ।

अस्त्वेवं योगभूमीनां देवलोकप्राप्तिहेतुत्वम्; तावता तपस्त्वं कुत इति चेत्, श्रुतेरिति ब्रूमः । तथा च तैत्तिरीया आमनन्ति–' तपसा देवा देवतामग्र आयन्, तपसर्षयः स्वरन्वविन्दन्' (तै. ब्रा. ३. १२. ३) इति । तत्वज्ञानात् प्राचीनस्य भूमिकात्रयस्य तपस्त्वे सति, तत्त्वज्ञानस्योत्तरकालीनस्य निर्विकल्पसमाधिरूपस्य पञ्चम्यादिभूमिकात्रयस्य तपस्त्वं कैमुतिकन्यायसिद्धम् । अत एव स्मर्यते–

' मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ।। ' इति ।

यद्यप्यनेन न्यायेन तपसा प्राप्यं जन्मान्तरं नास्ति, तथापि लोक संग्रहायेदं तपो युज्यते । अत एव भगवानाह–

' लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ।। '
(भ. गी. ३. २०) इति ।

संग्राह्यश्च लोकस्त्रिविधः–शिष्यो भक्तस्तटस्थश्चेति । तत्र शिष्यस्यान्तर्मुखे योगिनि गुरौ प्रामाणिकत्वबुद्ध्यतिशयेन

तदुपदिष्टे तत्त्वे परमं विश्वासं प्राप्य चित्तं सहसा विश्राम्यति । अत एव श्रूयते—

> 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
> तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ।।'
> (श्वे. उ. ६. २३) इति ।

स्मर्यते च—

> 'श्रद्धावाल्ँलभते ज्ञानं तत्परः संयतेन्द्रियः ।
> ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ।।'
> (भ. गी. ४. ३९) इति ।

अन्नप्रदाननिवासस्थानकल्पनादिना योगिनं सेवमानो भक्तस्तदीयं तपः स्वयमेवादत्ते । तथा च श्रूयते—'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति । तटस्थोऽपि द्विविधः—आस्तिको नास्तिकश्चेति । तत्रास्तिको योगिनः सन्मार्गाचरणं दृष्ट्वा स्वयमपि सन्मार्गे प्रवर्तते । तथा च स्मृतिः—

> 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
> स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ।।'
> (भ. गी. ३. २१) इति ।

नास्तिकोऽपि योगिना दृष्टः पापान्मुच्यते । तदुक्तम्—

> 'यस्यानुभवपर्यन्ता तत्त्वे बुद्धिः प्रवर्तते ।
> तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः ।।'
> (सू. सं. २. २०. ४४) इति ।

अनेन प्रकारेण सर्वप्राण्युपकारित्वं योगिनो विवक्षित्वा पठ्यते–

‘स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्तावनि-
र्यज्ञानां च सहस्रमिष्टमखिला देवाश्च संपूजिताः ।
संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ
यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ।।

कुलं पवित्रं जननी कृतार्था
विश्वंभरा पुण्यवती च तेन ।
अपारसंवित्सुखसागरेऽस्मिल्ँ
लीनं परे ब्रह्मणि यस्य चेतः ।। ’

(सू. सं. २. २०. ४५) इति ।

न केवलं योगिनः शास्त्रीयव्यवहारस्यैव तपस्त्वम्, किं तु सर्वस्यैव लौकिकव्यवहारस्यापि । तथा च तैत्तिरीयाः स्वशाखायां नारायणस्यान्तिमेनानुवाकेन विदुषोऽपि महिमानमामनन्ति । तस्मिंश्चानुवाके पूर्वभागे योगिनोऽवयवा यज्ञाङ्गद्रव्यत्वेनाम्नाताः –‘तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत्’ (नारा. उ. ८०) इति । अत्र च दानं दक्षिणेति दानपदमध्याहर्तव्यम्, ‘अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः’ इति छन्दोगैराम्नातत्वात् । उक्तानुवाके मध्यमभागेन योगिव्यवहारास्तज्जीवनकालाश्च ज्योतिष्टोमावयवक्रियारूपत्वेन, उत्तरभागेण सर्वयज्ञावयवक्रियारूपत्वेन चाम्नाताः–‘यावद् ध्रियते सा दीक्षा यदश्नाति

तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्संचरत्यु-पविशत्युत्तिष्ठते च स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृति-राहुतिर्यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधं यत्प्रातर्मध्यदिनꣳ सायं च तानि सवनानि ये अहोरात्रे ते दर्श-पूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः' (नारा. उ. ८०) इति । सर्ववेदसं सर्वस्वदक्षिणाकम् । अत्रैतच्छब्देन प्रकृताहोरात्रादिपरिवत्सरान्तं सर्वकालसमष्टयुपलक्षितं योगिन आयुर्विवक्ष्यते । यदायुस्तत्सर्वस्व-दक्षिणोपेतं सत्रमित्यर्थः । उक्तानुवाके चरमभागेन सर्वयज्ञात्मकं योगिनमुपासीनस्य क्रममुक्तिरूपं सूर्याचन्द्रमसोः कार्यकारणब्रह्मणो-स्तादात्म्यलक्षणं फलमाम्नायते–'एतद्वै जरामर्यमग्निहोत्रꣳ सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वा-दित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यꣳ सलोकतामाप्नोत्येतौ वै सूर्याचन्द्र-मसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद् ब्रह्मणो महिमा-नमाप्नोति तस्माद्ब्रह्मणो महिमानमित्युपनिषत्' (नारा. उ. ८०) इति । जरामरणावधिकं यद्योगिचरितमस्ति तद्वेदोक्ताग्निहोत्रादि-संवत्सरसत्रान्तकर्मस्वरूपमित्येवमुपासीनो भावनातिशयेन सूर्या-चन्द्रमसोः सायुज्यं तादात्म्यं प्राप्नोति । भावनामान्द्येन समानलोकं प्राप्य तस्मिल्ँलोके सूर्याचन्द्रमसोर्विभूतिमनुभूय तत ऊर्ध्वं सत्यलोके चतुर्मुखस्य ब्रह्मणो महिमानमाप्नोति । तत्रोत्पन्नतत्त्व-ज्ञानस्तत उर्ध्वं सत्यज्ञानानन्दरूपस्य परब्रह्मणो महिमानं कैवल्यं प्राप्नोति । इत्युपनिषदित्यनेन यथोक्तविद्यायास्तत्प्रतिपादक-

ग्रन्थस्य चोपसंहारः क्रियते । तदेवं जीवन्मुक्तेस्तपोरूपं द्वितीयं प्रयोजनं सिद्धम् । विसंवादाभावस्तृतीयं प्रयोजनम् । न खल्वन्तर्मुखे बाह्यव्यापारमपश्यति योगीश्वरे लौकिकस्तैर्थिको वा कश्चिद्विसंवदते । लौकिकविसंवादो द्विविधः—कलहरूपो निन्दारूपश्च । तत्र क्रोधादिरहितेन योगिना सह कथं नाम लौकिकः कलहायते ? तद्राहित्यं च स्मर्यते—

'क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।'
'अतिवादांस्तितिक्षेत नावमन्येत कंचन ।' इति ।
(मनु. ६. ४८, ४७)

ननु जीवन्मुक्तेः प्राचीनो विद्वत्संन्यासस्ततोऽपि प्राचीनं तत्त्वज्ञानं तस्मादपि प्राचीनो विविदिषासंन्यासः । तत्रैते क्रोधादिराहित्यादयो धर्माः स्मृता इति चेत् । बाढम् । अत एव जीवन्मुक्तस्य क्रोधादयः शङ्कितुमप्यशक्याः । अत्यर्वाचीने पदे विविदिषासंन्यासेऽपि यदा क्रोधादयो न सन्ति तदोत्तमपदे तत्त्वज्ञाने कुतस्ते स्युः, कुतस्तरां च विद्वत्संन्यासे, कुतस्तमां च जीवन्मुक्तौ? अतो न योगिना सह लौकिकस्य कलहः संभवति । नापि निन्दारूपो विसंवादः शङ्कनीयः । निन्द्यत्वस्यानिश्चितत्वात् । तथा च स्मर्यते—

'यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् ।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स वै यतिः ॥' इति ।

सदसत्त्वे उत्तमाधमजाती । तैर्थिकोऽपि किं शास्त्रप्रमेये विसंवदते किं वा योगिचरिते । आद्ये न तावद्योगी परशास्त्रप्रमेयं दूषयति—'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ'

(मु. उ. २. २. ५) 'नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत्' (बृ. उ. ४. ४. २१) इत्यादिश्रुत्यनुरोधात्। नापि स्वशास्त्रप्रमेयं प्रतिवादिनोऽग्रे समर्थयते,

'पलालमिव धान्यार्थी त्यजेद् ग्रन्थमशेषतः।'
(अमृतबि. उ. १८)

'परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत्॥'
(अमृतना. उ. १)

इत्यादिश्रुत्यर्थपरत्वात्। यदा योगी प्रतिवादिनमपि स्वात्मतया वीक्षते तदा विजिगीषायाः का कथा? नापि लौकायतिकव्यतिरिक्तः सर्वोऽपि तैर्थिको मोक्षमङ्गीकुर्वन् योगिचरितेऽपि विसंवदितुमर्हति, आर्हतबौद्धवैशेषिकनैयायिकशैववैष्णवशाक्तसांख्ययोगादिमोक्षशास्त्रेषु प्रतिपाद्यप्रमेयस्य नानाविधत्वेऽपि मोक्षसाधनस्य यमनियमाद्यष्टाङ्गयोगस्यैकविधत्वात्। तस्मादविसंवादेन सर्वसंमतो योगीश्वरः। एतदेवाभिप्रेत्य वसिष्ठ आह–

'यस्येदं जन्म पाश्चात्त्यं तमाश्वेव महामते।
विशन्ति विद्या विमला मुक्ता वेणुमिवोत्तमम्॥
आर्यता हृद्यता मैत्री सौम्यता मुक्तता ज्ञता।
समाश्रयन्ति तं नित्यमन्तःपुरमिवाङ्गनाः॥
पेशलाचारमधुरं सर्वे वाञ्छन्ति तं जनाः।
वेणुं मधुरनिध्वानं वने वनमृगा इव॥
सुषुप्तवत्प्रशमितभाववृत्तिना
स्थितः सदा जाग्रति येन चेतसा।

कलान्वितो विधुरिव यः सदा बुधै-
र्निषेव्यते मुक्त इतीह स स्मृतः ।। ' इति ।
' मातरीव शमं यान्ति विषमाणि मृदूनि च ।
विश्वासमिह भूतानि सर्वाणि शमशालिनि ।।
(ल. वा. ४. ६२)

तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च ।
बलवत्सु गुणाढ्येषु शमवानेव राजते ।।
इति । (४. ६६)

तदेवमबाधं जीवन्मुक्तेर्विसंवादाभावरूपं तृतीयं प्रयोजनं सिद्धम् । दुःखनाशसुखाविर्भावरूपे चतुर्थपञ्चमप्रयोजने विद्यानन्दात्मकेन ब्रह्मानन्दगतेन चतुर्थाध्यायेन निरूपिते । तदुभयमत्र संक्षिप्योच्यते—

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनु संज्वरेत् ।। '
(बृ. उ. ४. ४. १२)

इत्यादिश्रुत्या दुःखस्यैहिकस्य विनाश उक्तः । ' एतꣳ ह वाव न तपति किमहꣳ साधु नाकरवं किमहं पापमकरवम् ' (तै. उ. २. ९) इत्यादिश्रुतय आमुष्मिकहेतुपुण्यपापचिन्तारूपस्य दुःखस्य नाशमाहुः । सुखाविर्भावस्त्रेधा—सर्वकामावाप्तिः कृतकृत्यत्वं प्राप्तप्राप्तव्यत्वं चेति । सर्वकामावाप्तिस्त्रेधा—सर्वसाक्षित्वं सर्वत्राकामहतत्वं सर्वभोक्तृरूपत्वं चेति । ' हिरण्यगर्भादिस्थावरान्तेषु देहेष्वनुगतं साक्षिचैतन्यरूपं यद् ब्रह्म तदेवाहमस्मि ' इति जानतः स्वदेह इव परदेहेष्वपि सर्वकामसाक्षित्वमस्ति ।

तदेतदभिप्रेत्य श्रूयते–'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता' (तै. उ. २. १) इति। लोके भुक्तेषु भोगेष्वकामहतत्वं यत्तत्कामप्राप्तिरित्युच्यते। तथा च सर्वभोगदोषदर्शिनस्तत्त्वविदः सर्वत्राकामहतत्वादस्ति सर्वकामावाप्तिः। अत एव सार्वभौमोपक्रमेषु हिरण्यगर्भपर्यन्तेषूत्तरोत्तरशतगुणेष्वानन्देषु 'श्रोत्रियस्य चाकामहतस्य' इति श्रुतम्। सद्रूपेण चिद्रूपेणानन्दरूपेण च सर्वत्रावस्थितं स्वात्मानमनुसंदधतः सर्वभोक्तृत्वमस्तीत्यभिप्रेत्यैवं श्रूयते–'अहमन्नमहमन्नमहमन्नम्। अहमन्नादोऽहमन्नोदोऽहमन्नादः' (त. उ. ३. १०) इति। कृतकृत्यत्वं तु स्मर्यते–

'ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्॥'
'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते॥'
(भ. गी. ३. १७) इति।

प्राप्तप्राप्तव्यतापि श्रूयते–'अभयं वै जनक प्राप्तोऽसि' (बृ. उ. ४. २. २) इति, 'तस्मात्तत्सर्वमभवत्' (बृ. उ. १. ४. १०) इति, 'ब्रह्म वेद ब्रह्मैव भवति' (मु. उ. ३. २. ६) इति च। नन्वेतौ द्वौ दुःखविनाशसुखाविर्भावौ तत्त्वज्ञानेनैव सिद्धत्वान्न जीवन्मुक्तिप्रयोजनतामर्हतः। मैवम्, सुरक्षितयोस्तयोरत्र विवक्षितत्वात्। यथा तत्त्वज्ञानं पूर्वमेवोत्पन्नमपि जीवन्मुक्त्या सुरक्षितं भवति, एवमेतावपि सुरक्षितौ भवतः। नन्वेवं जीवन्मुक्तः पञ्चप्रयोजनत्वे सति समाहितो योगीश्वरो लोक-

व्यवहारं कुर्वतस्तत्त्वविदोऽपि श्रेष्ठ इति वक्तव्यम् ; तच्च रामवसिष्ठयोः (ल. वा. २५) प्रश्नोत्तराभ्यां निराकृतम्–

श्रीरामः–

‘ भगवन् भूतभव्येश कश्चिज्जातु समाहितः ।
प्रबुद्ध इव विश्रान्तो व्यवहारपरोऽपि सन् ।। ५ ।।
कश्चिदेकान्तमाश्रित्य समाधिनियमे स्थितः ।
तयोस्तु कतरः श्रेयानिति मे भगवन् वद ।। ६ ।। ’

वसिष्ठः–

‘ इमं गुणसमाहारमनात्मत्वेन पश्यतः ।
अन्तःशीतलता यासौ समाधिरिति कथ्यते ।। ७ ।।
दृश्यैर्न मम संबन्ध इति निश्चित्य शीतलः ।
कश्चित् संव्यवहारस्थः कश्चिद् ध्यानपरायणः ।। ८ ।।
द्वावेतौ राम सुसमावन्तश्चेत् परिशीतलौ ।
अन्तःशीतलता या स्यात् तदनन्ततपःफलम् ।। ९ ।।
इति ।

नष दोषः । अत्र वासनाक्षयरूपमन्तःशीतलत्वमवश्यं संपादनीयमित्येतावदेव प्रतिपाद्यते । न तु तदनन्तरभाविनो मनोनाशस्य श्रेष्ठत्वं निवार्यते । शीतलत्वं तृष्णायाः प्रशमनमित्येतादृशीं विवक्षां स्वयमेव स्पष्टीचकार–

‘ अन्तःशीतलतायां तु लब्धायां शीतलं जगत् ।
अन्तस्तृष्णोपतप्तानां दावदाहमयं जगत् ।। २४ ।। ’
इति ।

ननु समाधिनिन्दा व्यवहारप्रशंसा चात्रोपलभ्येते–

‘ समाधिस्थानकस्थस्य चेतश्चेद् वृत्तिचञ्चलम् ।
तत्तस्य तु समाधानं सममुन्मत्तताण्डवैः ।। १० ।।
उन्मत्तताण्डवस्थस्य चेतश्चेत् क्षीणवासनम् ।
तदस्योन्मत्तनृत्यं तु समं ब्रह्मसमाधिना ।। ११ ।’

इति

मैवम् । अत्र हि समाधिप्राशस्त्यमेवाङ्गीकृत्य वासना निन्द्यते । इयमत्र वचनव्यक्तिः–यद्यपि व्यवहारात् समाधिः प्रशस्तः, तथाप्यसौ सवासनश्चेत् तदा निर्वासनाद्व्यवहारादधम एवेति स न समाधिः । यदा समाहितव्यवहर्तारावुभावप्यतत्त्वज्ञौ सवासनौ च, तदा समाधेरुत्तमलोकप्राप्तिहेतुपुण्यत्वेन प्राशस्त्यम् । यदा तूभौ ज्ञाननिष्ठौ निर्वासनौ च, तदापि वासनाक्षयरूपां जीवन्मुक्तिं परिपालयन्नयं मनोनाशरूपः समाधिः प्रशस्त एव । तस्माद् योगीश्वरस्य श्रेष्ठत्वात् पञ्चप्रयोजनोपेताया जीवन्मुक्तेर्न कोऽपि विघ्न इति सिद्धम् ।।

**इति श्रीमद्विद्यारण्यप्रणीते जीवन्मुक्तिविवेके जीवन्मुक्तिस्वरूपसिद्धिप्रयोजननिरूपणं नाम चतुर्थं प्रकरणम् ।। ४ ।।**

---

## पञ्चमं विद्वत्संन्यासप्रकरणम्

एवं स्वरूपप्रमाणसाधनप्रयोजनैर्जीवन्मुक्तिर्निरूपिता । अथ तदुपकारिणं विद्वत्संन्यासं निरूपयामः । विद्वत्संन्यासश्च परमहंसोपनिषदि प्रतिपादितः । तां चोपनिषदमनूद्य व्याख्यास्यामः ।

तत्रादौ विद्वत्संन्यासयोग्यं प्रश्नमवतारयति—

**‘ अथ योगिनां परमहंसानां कोऽयं मार्गस्तेषां का स्थितिरिति नारदो भगवन्तमुपगत्योवाच ’ इति ।**

यद्यप्यथशब्दापेक्षित आनन्तर्यप्रतियोगी न कोऽप्यत्र प्रतिभाति, तथापि प्रष्टव्यार्थोऽत्र विद्वत्संन्यासः । तस्मिंश्च विदिततत्त्वो लोकव्यवहारैर्विक्षिप्यमाणो मनोविश्रान्तिं कामयमानोऽधिकारी । ततस्तादृगधिकारसंपत्त्यानन्तर्यमथशब्दार्थः । केवलयोगिनं केवलपरमहंसं च वारयितुं पदद्वयमुक्तम् । केवलयोगी तत्त्वज्ञानाभावेन त्रिकालज्ञानाकाशगमनादिषु योगैश्वर्यचमत्कारव्यवहारेष्वासक्तः संयमविशेषैस्तत्र तत्रोद्युङ्क्ते । ततः परमपुरुषार्थाद् भ्रष्टो भवति । अस्मिन्नर्थे सूत्रं पूर्वमेवोदाहृतम्—‘ते समाधावुपसर्गा व्युत्थाने सिद्धयः’ (३. ३८) इति । केवलपरमहंसस्तु तत्त्वविवेकेनैश्वर्येष्वसारतां बुद्ध्वा विरज्यति । (ल. वा. २७) तदप्युदाहृतम्—

'चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तय: ।
इत्यस्याश्चर्यजालेषु नाभ्युदेति कुतूहलम् ।। ६७ ।।'
इति ।

विरक्तोऽप्यसौ ब्रह्मविद्याभरेण विधिनिषेधावुल्लङ्घयति । तदुक्तम्–'निस्त्रैगुण्ये पथि विचरतां को विधि: को निषेध:' इति । तथा च श्रद्धालव: शिष्टास्तमेवं निन्दन्ति–

'सर्वे ब्रह्म वदिष्यन्ति संप्राप्ते तु कलौ युगे ।
नानुतिष्ठन्ति मैत्रेय शिश्नोदरपरायणा: ।।'
(वि. पु.) इति ।

योगिनि तु परमहंसे यथोक्तं दोषद्वयं नास्ति । अन्योऽप्यस्यातिशय: प्रश्नोत्तराभ्यां (ल. वा. ४२) दर्शित:–

श्रीराम:–

'एवं स्थितेऽपि भगवञ्जीवन्मुक्तस्य सन्मते: ।
अपूर्वोऽतिशय: कोऽसौ भवत्यात्मविदां वर ।। १ ।।'

वसिष्ठ:–

'ज्ञस्य कस्मिंश्चिदप्येषा भवत्यतिशये न धी: ।
नित्यतृप्त: प्रशान्तात्मा स आत्मन्येव तिष्ठति ।। २ ।।
मन्त्रसिद्धैस्तप:सिद्धैर्योगसिद्धैश्च भूरिश: ।
कृतमाकाशयानादि तत्र का स्यादपूर्वता ।। ३ ।।
एक एव विशेषोऽस्य न समो मूढबुद्धिभि: ।
सर्वत्रास्थापरित्यागान्नीरागममलं मन: ।। ५ ।।
एतावदेव खलु लिङ्गमलिङ्गमूर्ते:
संशान्तसंसृतिचिरभ्रमनिर्वृतस्य ।

तज्ज्ञस्य यन्मदनकोपविषादमोह-
लोभापदामनुदिनं निपुणं तनुत्वम् ।। ६ ।। ' इति ।

एतेनातिशयेनोपेतानां दोषद्वयरहितानां मार्गस्थिती पृच्छ्येते । वेषभाषादिरूपो हि व्यवहारो मार्गः । चित्तोपरमरूप आन्तरो धर्मः स्थितिः । भगवांश्चतुर्मुखो ब्रह्मा यथोक्तं प्रश्नोत्तर-मवतारयति–

' **तं भगवानाह** ' इति ।

वक्ष्यमाणमार्गे श्रद्धातिशयमुत्पादयितुं तं मार्गं प्रशंसति–

' **सोऽयं परमहंसानां मार्गो लोके दुर्लभतरो न तु बाहुल्यः** '
(परम. उ. १) इति ।

यः पृष्टः सोऽयमिति योजना । अयमित्युत्तरग्रन्थे वक्ष्यमाण आच्छादनादिः स्वशरीरोपभोगेन लोकोपकारेण च निरपेक्षो मुख्यो मार्गः परामृश्यते । तादृशस्य परमकाष्ठां प्राप्तस्य वैराग्य-स्यादृष्टचरत्वात् तस्य मार्गस्य दुर्लभतरत्वम । न चैतावतात्यन्ता-भावः शङ्कनीय इत्यभिप्रेत्य बाहुल्यमेव प्रतिषेधति–न त्विति बाहुल्यमिति वक्तव्ये लिङ्गव्यत्ययश्छान्दसः ।

नन्वयं मार्गो दुर्लभतरश्चेत्तर्हि तदर्थं प्रयासो न कर्तव्यः, तेन प्रयोजनाभावादित्याशङ्क्याह–

' **यद्येकोऽपि भवति स एव नित्यपूतस्थः स एव वेदपुरुष इति विदुषो मन्यन्ते** ' इति ।

' मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ।। '
(भ. गी. ७. ३)

इति न्यायेन यत्र क्वापि यदा कदाचिद् योगी परमहंसो यदि कश्चिल्लभ्यते तर्हि स एव नित्यपूतस्थो भवति। नित्यपूतः परमात्मा, 'य आत्मापहतपाप्मा' (छा. उ. ८. १) इति श्रुतेः। एवकारेण केवलयोगी केवलपरमहंसश्च व्यावर्त्येते। केवलयोगी नित्यपूतं न जानाति। केवलपरमहंसो जानन्नपि चित्तविश्रान्त्यभावाद् बहिर्मुखो ब्रह्मणि न तिष्ठति। वेदप्रतिपाद्यः पुरुषो वेदपुरुषः। विदुषो विद्वांसो ब्रह्मानुभवचित्तविश्रान्तिप्रतिपादकशास्त्रपारंगता योगिनः। परमहंसस्य ब्रह्मनिष्ठत्वं सर्वे जना मन्यन्ते। यथोक्ता विद्वांसस्तु तदप्यसहमाना ब्रह्मत्वमेव मन्यन्ते। तथा च स्मर्यते–

'दर्शनादर्शने हित्वा स्वयं केवलरूपतः।
यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित् स्वयम्॥'

इति।

अतो न प्रयोजनाभावः शङ्कितुमपि शक्यते।

नित्यपूतस्थत्वं वेदपुरुषत्व च मुखतो विशदयन्नर्थात 'का स्थितिः?' इति प्रश्नस्योत्तरं सूत्रयति–

**'महापुरुषो यच्चित्तं तत्सर्वदा मय्येवावस्थापयति, तस्मादहं च तस्मिन्नेवावस्थितः'** इति।

वैदिकज्ञानकर्माधिकारिषु पुरुषेषु मध्ये योगिनः परमहंसस्यात्यन्तमुत्तमत्वान्महापुरुषत्वम्। स च महापुरुषो यच्चित्तं स्वकीयं तत्सर्वदा मय्येवावस्थापयति, संसारगोचराणां तदीयचित्तवृत्तीनामभ्यासवैराग्याभ्यां निरुद्धत्वात्। अत एव भगवान् प्रजापतिः शास्त्रसिद्धं परमात्मानं स्वानुभवेन परामृशन्मयीति

व्यपदिशति । यस्माद्योगी मय्येव चित्तं स्थापयति तस्मादहमपि परमात्मस्वरूपत्वेन तस्मिन्नेव योगिन्याविर्भूतोऽवस्थितोऽस्मि नेतरेष्वज्ञानिषु, तेषामविद्यावृतत्वात् । तत्त्ववित्स्वप्ययोगिषु बाह्यचित्तवृत्तिभिरावृतत्वान्नास्त्याविर्भावः ।

इदानीं कोऽयं मार्ग इति पृष्टं मार्गमुपदिशति–

'**असौ स्वपुत्रमित्रकलत्रबन्ध्वादीञ्छिखायज्ञोपवीते स्वाध्यायं च सर्वकर्माणि संन्यस्यायं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकस्योपकारार्थाय च परिग्रहेत्**' (परम. उ. १) इति ।

यो गृहस्थः पूर्वजन्मसंचितपुण्यपुञ्जे परिपक्के सति मातृ-पित्राज्ञादिना निमित्तेन विविदिषासंन्यासरूपं परमहंसाश्रमम-स्वीकृत्यैव श्रवणादिसाधनान्यनुष्ठाय तत्त्वं सम्यगवगच्छति, ततो गृहस्थस्य प्राप्तैर्लौकिकवैदिकव्यवहारसहस्रैश्चित्ते विक्षिप्ते सति विश्रान्तिसिद्धये विद्वत्संन्यासं चिकीर्षति, तं प्रति स्वपुत्र-मित्रेत्याद्युपदेशः, पूर्वमेव विविदिषासंन्यासं कृत्वा तत्त्वं विदितवतो विद्वत्संन्यासं चिकीर्षोः पुत्रकलत्रादिप्रसङ्गाभावात् । नन्वयं विद्वत्संन्यासः किमितरसंन्यासवत्प्रैषोच्चारणादिविध्युक्तप्रकारेण संपादनीयः, किं वा जीर्णवस्त्रसोपद्रवग्रामादित्यागवल्लौकिक-त्यागमात्ररूपः? नाद्यः, तत्त्वविदः कर्तृत्वराहित्येन विधिनिषेधा-नधिकारात् । अत एव स्मर्यते–

' ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित् कर्तव्यमस्ति चेन्न स तत्त्ववित् ।। '

इति ।

न द्वितीयः। कौपीनदण्डाद्याश्रमलिङ्गविधानश्रवणात्। नैष दोषः, प्रतिपत्तिकर्मवदुभयरूपत्वोपपत्तेः। तथा हि–ज्योतिष्टोमे दीक्षितस्य दीक्षाङ्गनियमानुष्ठानकाले कण्डूयितुं हस्तं प्रतिषिध्य कृष्णविषाणा विहिता 'यद्धस्तेन कण्डूयेत पामानंभावुकाः प्रजाः स्युर्यत्स्मयेत नग्नंभावुकाः' इति, 'कृष्णविषाणया कण्डूयते' इति च। तस्याश्च कृष्णविषाणायाः समाप्ते नियमे प्रयोजनाभावाद् वोढुमशक्यत्वाच्च त्यागः स्वत एव प्राप्तः। तं च त्यागं सप्रकारं वेदो विदधाति–'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति। तदिदं प्रतिपत्तिकर्म लौकिकं वैदिकं चेत्युभयरूपम्। एवं विद्वत्संन्यासोऽप्युभयरूपः। न च तत्त्वविदि कर्तृत्वस्यात्यन्ताभावः शङ्कनीयः, चिदात्मन्यारोपितस्य कर्तृत्वस्य विद्ययापोहितत्वेऽपि चिच्छायोपेतेऽन्तःकरणोपाधौ विक्रियासहस्रयुक्ते स्वतःसिद्धस्य कर्तृत्वस्य यावद्द्रव्यभावितयानपोहितत्वात्। न च 'ज्ञानामृतेन-' इत्यादिस्मृतिविरोधः, सत्यपि ज्ञाने विश्रान्तिरहितस्य तृप्त्यभावेन विश्रान्तिसंपादनलक्षणकर्तव्यशेषसद्भावेन कृतकृत्यत्वाभावात्। ननु तत्त्वविदोऽपि विध्यङ्गीकारे सति तेनापूर्वेण देहान्तरमारभ्येत। मैवम्, तस्यापूर्वस्य चित्तविश्रान्तिप्रतिबन्धनिवारणलक्षणस्य दृष्टफलस्य संभवे सत्यदृष्टफलकल्पनाया अन्याय्यत्वात्; अन्यथा श्रवणादिविधिष्वपि ब्रह्मज्ञानोत्पत्तिप्रतिबन्धनिवारणरूपं दृष्टफलमुपेक्ष्य जन्मान्तरहेतुत्वं कल्प्येत। तस्माद्विध्यङ्गीकारे दोषाभावाद्विविदिषुरिव विद्वानपि गृहस्थो नान्दीमुखश्राद्धोपवासजागरणादिविधिमनुसृत्यैव संन्यस्येत्। यद्यप्यत्र श्राद्धादिकं नोपदिष्टं तथाप्यस्य विद्वत्संन्यासस्य विविदिषासंन्यासविकृतित्वात् 'प्रकृतिवद्विकृतिः कर्तव्या'

इति न्यायेन तदीया धर्माः सर्वेऽप्यत्र प्राप्नुवन्ति, यथाग्निष्टोमस्य विकृतिष्वतिरात्रादिषु तदीयधर्मप्राप्तिस्तद्वत्। तस्मादितरसंन्यासवदत्रापि प्रैषमन्त्रेण पुत्रमित्रादित्यागं संकल्पयेत्। बन्ध्वादीनित्यादिशब्देन भृत्यपशुगृहक्षेत्रादिलौकिकपरिग्रहादिविशेषाः संगृह्यन्ते। स्वाध्यायं चेति चकारेण तदर्थनिर्णयोपयुक्तानि पदवाक्यप्रमाणशास्त्राणि वेदोपबृंहकाणीतिहासपुराणादीनि च समुच्चिनोति। औत्सुक्यनिवृत्तिमात्रप्रयोजनानां काव्यनाटकादीनां त्यागः कैमुतिकन्यायसिद्धः। सर्वकर्माणीति सर्वशब्देन लौकिकवैदिकनित्यनैमित्तिकनिषिद्धकाम्यानि संगृह्यन्ते। पुत्रादित्यागेनैहिकभोगः परिहृतः। सर्वकर्मत्यागेन चामुष्मिकभोगाशा चित्तविक्षेपकारिणी परिहृता। अयमिति छान्दसविभक्तिलिङ्गव्यत्ययेनेदं ब्रह्माण्डमिति योजनीयम्। ब्रह्माण्डत्यागो नाम तत्प्राप्तिहेतोर्विराडुपासनस्य त्यागः। ब्रह्माण्डं चेति चकारेण सूत्रात्मप्राप्तिहेतोर्हिरण्यगर्भोपासनस्य तत्त्वज्ञानहेतूनां श्रवणादीनां च समुच्चयः। स्वपुत्रादिहिरण्यगर्भोपासनान्तमैहिकमामुष्मिकं च सुखसाधनं सर्वं प्रैषमन्त्रोच्चारणेन परित्यज्य कौपीनादिकं परिगृह्णीयात्। आच्छादनं चेति चकारेण पादुकादीनि समुच्चिनोति। तथा च स्मृतिः–

'कौपीनयुगलं वासः कन्थां शीतनिवारिणीम्।
पादुके चापि गृह्णीयात् कुर्यान्नान्यस्य संग्रहम्॥'
इति।

स्वशरीरोपभोगो नाम कौपीनेन लज्जाव्यावृत्तिः। दण्डेन गोसर्पाद्युपद्रवपरिहारः। आच्छादनेन शीतादिपरिहारः। चकारात् पादुकाभ्यामुच्छिष्टदेशस्पर्शादिपरिहारं समुच्चिनोति।

लोकस्योपकारो नाम दण्डादिलिङ्गैनैतदीयमुत्तमाश्रमं परिज्ञाय तदुचिताभिवन्दनभिक्षाप्रदानादिप्रवृत्त्या सुकृतसिद्धिः । चकारेणाश्रममर्यादायाः शिष्टाचारप्राप्तायाः पालनं समुच्चिनोति ।

कौपीनादिपरिग्रहस्यानुकूलत्वमभिप्रेत्य मुख्यत्वं प्रतिषेधति–

'**तच्च न मुख्योऽस्ति**' इति । (परम. उ. १.)

यत्कौपीनादिपरिग्रहणमस्ति तदप्यस्य योगिनः परमहंसस्य मुख्यः कल्पो न भवति, किं त्वनुकल्प एव । विविदिषासंन्यासिनस्तु दण्डग्रहणं मुख्यमिति कृत्वा दण्डवियोगस्य निषेधः स्मर्यते–

'दण्डात्मनोस्तु संयोगः सर्वदैव विधीयते ।
न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ।।' इति ।

प्रायश्चित्तमपि दण्डनाशे प्राणायामशतं स्मर्यते–'दण्डत्यागे शतं चरेत्' इति ।

योगिनः परमहंसस्य मुख्यं कल्पं प्रश्नोत्तराभ्यां दर्शयति–

'**कोऽयं मुख्य इति चेदयं मुख्यः, न दण्डं न शिखं न यज्ञोपवीतं नाच्छादनं चरति परमहंसः**' इति । (परम. उ. १-२)

न शिखमिति छान्दसो लिङ्गव्यत्ययोऽनुसंधेयः । यथा विविदिषुः परमहंसः शिखायज्ञोपवीताभ्यां रहितो मुख्यस्तथा योगी दण्डाच्छादनाभ्यां रहितः सन्मुख्यो भवति, दण्डस्य वैणवत्वादिलक्षणमाच्छादनस्य कन्थात्वादिलक्षणं च परीक्षितुं दण्डादिकं संपादयितुं रक्षितुं च चित्ते व्यापृते सति चित्तवृत्तिनिरोधलक्षणो योगो न सिध्येदिति । तच्च न युक्तम्, 'न हि वरविघाताय कन्योद्वाहः' इति न्यायात् ।

आच्छादनाद्यभावे शीतादिबाधायाः कः प्रतीकार इत्याशङ्क्याह—

**'न शीतं न चोष्णं न सुखं न दुःखं**
**न मानावमानौ च षडूर्मिवर्जम्'** इति ।
(परम. उ. २)

निरुद्धाशेषचित्तवृत्तेर्योगिनः शीतं नास्ति, तत्प्रतीत्यभावात् । यथा लीलायामासक्तस्य बालस्याच्छादनादिरहितस्यापि हेमन्तशिशिरयोः प्रातःकालेऽपि शीतं नास्ति, तथा परमात्मन्यासक्तस्य योगिनः शीताभावः । घर्मकाल उष्णाभावश्च तथैवावगन्तव्यः । वर्षासु तदभावसमुच्चयार्थश्चकारः । शीतोष्णयोरप्रतीतौ तज्जन्ययोः सुखदुःखयोरभाव उपपन्नः । निदाघे शीतं सुखजनकं हेमन्ते दुःखजनकम् । उक्तविपर्यय उष्णे द्रष्टव्यः । मानः पुरुषान्तरेण संपादितः सत्कारः । अवमानस्तिरस्कारः । यदा योगिनः स्वात्मव्यतिरिक्तं पुरुषान्तरमेव न प्रतीयते तदा मानावमानौ दूरापेतौ । चकारः शत्रुमित्ररागद्वेषादिद्वन्द्वाभावं समुच्चिनोति । षडूर्मयः—क्षुत्पिपासे शोकमोहौ जरामरणे च । तेषां त्रयाणां द्वन्द्वानां क्रमेण प्राणमनोदेहधर्मत्वादात्मतत्त्वाभिमुखस्य योगिनस्तद्वर्जनं युज्यते ।

नन्वस्त्वेवं समाधिदशायां शीताद्यभावः, व्युत्थानदशायां तु निन्दादिक्लेशः संसारिणमिवैनं बाधेतैवेत्याशङ्क्याह—

**'निन्दागर्वमत्सरदम्भदर्पेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हित्वा'** इति । (परम. उ. २)

विविधैः पुरुषैः स्वस्मिन्नापादिता दोषोक्तिर्निन्दा। अन्येभ्योऽधिकोऽहमिति चित्तवृत्तिर्गर्वः। विद्याधनादिभिरनन्यसदृशो भवामीति बुद्धिर्मत्सरः। परेषामग्रे जपध्यानादिप्रकटनं दम्भः। भर्त्सनादिषु दृढबुद्धिर्दर्पः। धनाद्यभिलाष इच्छा। शत्रुवधादिषु बुद्धिर्द्वेषः। अनुकूलद्रव्यादिलाभेन बुद्धिस्वास्थ्यं सुखम्। तद्विपर्ययो दुःखम्। योषिदाद्यभिलाषः कामः। कामितार्थविघातजन्यो बुद्धिक्षोभः क्रोधः। लब्धस्य धनस्य त्यागासहिष्णुत्वं लोभः। हितेष्वहितबुद्धिरहितेषु च हितबुद्धिर्मोहः। चित्तगतसुखाभिव्यञ्जिका मुखविकासादिहेतुर्धीवृत्तिर्हर्षः। परकीयगुणेषु दोषत्वारोपणमसूया। देहेन्द्रियादिसंघातेष्वात्मभ्रमोऽहंकारः। आदिशब्देन भोग्यवस्तुषु ममकारसमीचीनत्वादिबुद्धयो गृह्यन्ते। चकारो यथोक्तनिन्दादिविपरीतं स्तुत्यादिकं समुच्चिनोति। एतान् सर्वान् निन्दादीन् हित्वा पूर्वोक्तवासनाक्षयाभ्यासेन परित्यज्यावतिष्ठेतेति शेषः।

ननु विद्यमाने स्वदेहे तत्परित्यागो न संभवतीत्याशङ्कयाह—

**'स्ववपुः कुणपमिव दृश्यते यतस्तद्वपुरपध्वस्तम्'** (परम. उ. २) इति।

पूर्वं यत्स्वकीयं वपुस्तदिदानीं योगिना स्वात्मचैतन्यात् पृथग्भूतत्वेन कुणपमिवावलोक्यते। यथा श्रद्धालुः स्पर्शनभीत्या शवदेहं दूरे स्थितोऽवलोकयति, तथायं योगी तादात्म्यभ्रान्त्युदयभीत्या सावधानो देहं चिदात्मनः सकाशान्निरन्तरं विविनक्ति। यतः कारणात् तद्वपुराचार्योपदेशागमानुभवैरपध्वस्तं चिदात्मनः

सकाशान्निराकृतम् । ततश्चैतन्यवियुक्तस्य देहस्य शवतुल्यतया दृश्यमानत्वात् सत्यपि देहे निन्दादित्यागो घटत इत्यभिप्रायः ।

ननूत्पन्नो दिग्भ्रमः सूर्योदयदर्शनेन विनष्टोऽपि यथा कदाचिदनुवर्तते, तथा कदाचिदात्मनि देहात्मसंशयाद्यनुवृत्तौ निन्दादिक्लेशः पुनः पुनः प्रसज्येतेत्याशङ्कयाह–

**'संशयविपरीतमिथ्याज्ञानानां यो हेतुस्तेन नित्यनिवृत्तः'** इति ।

आत्मा कर्तृत्वादिधर्मोपेतस्तद्रहितो वेत्यादिकं संशयज्ञानम् । देहादिरूप एवात्मेति विपरीतज्ञानम् । एतदुभयं भोक्तृविषयम् । मिथ्याज्ञानं तु भोग्यविषयमत्र विवक्षितम् । तच्चानेकविधम् 'संकल्पप्रभवान्कामान्' (भ. गी. ६. २४) इत्यत्र स्पष्टीकृतम् । तद्धेतुश्चतुर्विधः, 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या' (२. ५) इति सूत्रणात् । अनित्ये गिरिनदीसमुद्रादौ नित्यत्वभ्रान्तिरेका । अशुचौ पुत्रभार्यादिशरीरे शुचित्वभ्रान्तिर्द्वितीया । दुःखे कृषिवाणिज्यादौ सुखत्वभ्रान्तिस्तृतीया । गौणमिथ्यात्मनि पुत्रभार्यादावन्नमयादिके चानात्मनि मुख्यात्मत्वभ्रान्तिश्चतुर्थी । एतेषां संशयादीनां हेतुरद्वितीयब्रह्मात्मतत्त्वावरकमज्ञानं तद्वासना च । तच्चाज्ञानं योगिनः परमहंसस्य महावाक्यार्थबोधेन निवृत्तम् ; वासना तु योगाभ्यासेन निवृत्ता । उदाहृतायां दिग्भ्रान्तावज्ञाने निवृत्तेऽपि वासनायाः सद्भावाद्यथापूर्वं भ्रान्तिव्यवहारः । योगिनस्तु भ्रान्तिहेतुद्वयराहित्यात् कुतः संशयादीन्यनुवर्तेरन् ? [1]तमेनमनु-

[1] तमेवम् इतीतरमुद्रितग्रन्थेषु.

वृत्त्यभावमभिप्रेत्य तेन हेतुद्वयेन योगी नित्यनिवृत्त इत्युक्तम् । सत्यामप्यज्ञानतद्वासनानिवृत्तौ तस्या निवृत्तेर्विनाशाभावान्नित्यत्वं द्रष्टव्यम् ।

तन्नित्यत्वे हेतुमाह–

‘**तन्नित्यबोधः**’ (परम. उ. २) इति ।

सर्वनामत्वात् प्रसिद्धार्थवाची तच्छब्दोऽत्र सर्ववेदान्त-प्रसिद्धं परमात्मानमाचष्टे । तस्मिन्परमात्मनि नित्यो बोधो यस्य योगिनः सोऽयं तन्नित्यबोधः । योगी हि ‘तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः’ (बृ. उ. ४. ४. २१) इति श्रुतिमनुसृत्य चित्तविक्षेपान् योगेन परिहृत्य नैरन्तर्येण परमात्मविषयामेव प्रज्ञां करोति । अतो बोधस्य नित्यत्वाद् बोधविनाश्ययोरज्ञान-तद्वासनयोर्निवृत्तिर्नित्येत्यर्थः ।

बुध्यमानस्य परमात्मनस्तार्किकेश्वरवत् तटस्थत्वशङ्कां वारयति–

‘**तत्स्वयमेवावस्थितिः**’ (परम. उ. २) इति ।

यद्वेदान्तवेद्यं परं ब्रह्मास्ति तत्स्वयमेव न तु स्वस्मादन्य-दित्येवं निश्चित्य योगिनोऽवस्थितिर्भवति ।

तस्य योगिनो ब्रह्मानुभवप्रकारं दर्शयति–

‘**तं शान्तमचलमद्वयानन्दविज्ञानघन एवास्मि तदेव मम परमं धाम**’ (परम उ. २) इति ।

तमित्यादिपदत्रये द्वितीया प्रथमार्थे द्रष्टव्या । यः परमात्मा शान्तः क्रोधादिविक्षेपरहितः, अचलो गमनादिक्रियारहितः,

स्वगतसजातीयविजातीयभेदशून्यः सच्चिदानन्दैकरसोऽस्ति स एवाहमस्मि । तदेव ब्रह्मतत्त्वं मम योगिनः परमं धाम वास्तवं स्वरूपम्; न त्वेतत्कर्तृत्वभोक्तृत्वादियुक्तम्, एतस्य मायाकल्पितत्वात् । नन्वात्मनः परब्रह्मत्व आनन्दावाप्तिरिदानीं कुतो नेत्यत्रानन्दावाप्तिः सदृष्टान्तमुक्ताभियुक्तैः—

'गवां सर्पिः शरीरस्थं न करोत्यङ्गपोषणम् ।
तदेव कर्मरचितं पुनस्तस्यैव भेषजम् ।।
एवं सर्वशरीरस्थः सर्पिर्वत्परमेश्वरः ।
विना चोपासनां देवो न करोति हितं नृषु ।।' इति ।

यदि योगिनः पूर्वाश्रमप्रसिद्धा आचार्यपितृभ्रात्रादयः कर्मिणः श्रद्धाजडाः शिखायज्ञोपवीतसंध्यावन्दनादिराहित्येन पाषण्डित्वमारोप्य व्यामोहयेयुस्तदा व्यामोहानुत्पत्तये योगिनो वर्तमानं निश्चयं दर्शयति—

**'तदेव च शिखा तदेवोपवीतं च परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः सा संध्या'** (परम. उ. २) इति ।

यद्वेदान्तवेद्यस्य परब्रह्मणो ज्ञानं तदेव कर्माङ्गभूतबाह्यशिखायज्ञोपवीतस्थानीयम् । अन्ये च मन्त्रद्रव्यलक्षणे कर्माङ्गभूते चकाराभ्यां समुच्चीयेते । शिखाद्यङ्गसाध्यैः कर्मभिरुत्पन्नं यत्स्वर्गादिसुखं तत्सर्वं ब्रह्मज्ञानेनैव लभ्यते, विषयानन्दस्य सर्वस्य ब्रह्मानन्दलेशत्वात् । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ. उ. ४. ३. ३२) इति श्रुतिः । एतदेवाभिप्रेत्याथर्वणिका ब्रह्मोपनिषद्यामनन्ति—

' सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद् बुधः ।
यदक्षरं परं ब्रह्म तत् सूत्रमिति धारयेत् ।।
सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम् ।
तत्सूत्रं विदितं येन स विप्रो वेदपारगः ।।
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत्सूत्रं धारयेद् योगी योगवित् तत्त्वदर्शिवान् ।।
बहिःसूत्रं त्यजेद् विद्वान् योगमुत्तममास्थितः ।
ब्रह्मभावमिदं सूत्रं धारयेद्यः स चेतनः ।
धारणात् तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ।।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।।
ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ।।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान् नेतरे केशधारिणः ।।
कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
तैर्विधार्यमिदं सूत्रं कर्माङ्गं तद्धि वै स्मृतम् ।।
शिखा ज्ञानमयी यस्योपवीतं चापि तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ।।
इदं यज्ञोपवीतं च परमं यत्परायणम् ।
विद्वान् यज्ञोपवीती स्यात् तज्ज्ञास्तं यज्विनं विदुः ।। '
(ब्र. उ. ६-१५) इति ।

तस्माद्योगिनः शिखायज्ञोपवीते यथा विद्येते तथैव संध्यपि विद्यते । यः शास्त्रगम्यः परमात्मा यश्चाहंप्रत्ययगम्यो जीवात्मा,

तयोरेकत्वज्ञानेन महावाक्यजन्येन भ्रान्तिप्रतीतो भेदो विशेषेण भग्न एव । पुन भ्रान्त्यनुदयो भङ्गस्य विशेषः । येयमेकत्वबुद्धिः सेयमुभयोरात्मनोः संधौ जायमानत्वात् संध्येत्युच्यते । अहोरात्रयोः संधावनुष्ठेया क्रिया यथा संध्या तद्वत् । एवं च सति योगी श्रद्धाजडैर्न व्यामोहयितुं शक्यः ।

'कोऽयं मार्गः? ' इति प्रश्नस्य 'असौ स्वपुत्र-' इत्यादिनोत्तरमुक्तम् । 'का स्थितिः? ' इन्येतस्य 'महापुरुषः–' इत्यादिना संक्षिप्योत्तरमुक्त्वा 'संशयविपरीत-' इत्यादिना तदेव प्रपञ्च्येदानीमुपसंहरति–

**'सर्वान् कामान् परित्यज्य अद्वैते परमा स्थितिः ।'**

(परम. उ. ३) इति ।

क्रोधलोभादीनां कामपूर्वकत्वात् कामपरित्यागेन चित्तदोषाः सर्वेऽपि परित्यज्यन्ते । एतदेवाभिप्रेत्य वाजसनेयिभिराम्नातम्–'अथो खल्वाहुः काममय एवायं पुरुषः' (बृ. उ. ४. ४. ५.) इति । अतो निष्कामस्य योगिचित्तस्याद्वैते निर्विघ्ना स्थितिरुपपद्यते ।

ननु दण्डग्रहणविधिवासनयोपेता विविदिषासंन्यासिनो योगिनं दण्डरहितं परमहंसं नाभ्युपगच्छन्तीत्याशङ्कयाह–

**'ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ॥**
**काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ।**
**स याति नरकान् घोरान् महारौरवसंज्ञकान् ॥**

**तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः ।**
**भिक्षामात्रेण यो जीवेत् स पापी यतिवृत्तिहा ।।**
**इदमन्तरं ज्ञात्वा स परमहंसः' (परम. ३. ३)**
**इति ।**

परमहंसस्य योऽयमेकदण्डः स द्विविधः—ज्ञानदण्डः काष्ठदण्डश्चेति । यथा त्रिदण्डिनो वाग्दण्डो मनोदण्डः कर्मदण्डश्चेति त्रैविध्यं तद्वत् । वाग्दण्डादयो मनुना स्मर्यन्ते—

'वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च ।
यस्यैते नियता बुद्धौ स त्रिदण्डीति चोच्यते ।।
त्रिदण्डमेतन्निक्षिप्य सर्वभूतेषु मानवः ।
कामक्रोधौ तु संयम्य ततः सिद्धिं निगच्छति ।।'
(मनु. १२. १०, ११) इति ।

तेषां स्वरूपं दक्षः स्मरति—

'वाग्दण्डोऽथ मनोदण्डः कर्मदण्डस्तथैव च ।
यस्यैते नियता दण्डास्त्रिदण्डीति स उच्यते ।।
वाग्दण्डे मौनमातिष्ठेत् कर्मदण्डे त्वनीहताम् ।
मानसस्य तु दण्डस्य प्राणायामो विधीयते ।।' इति ।

'कर्मदण्डोऽल्पभोजनम्' इति स्मृत्यन्तरपाठः । ईदृशं त्रिदण्डित्वं परमहंसस्याप्यस्ति । तदेतदभिप्रेत्य पितामहः स्मरति—

'यतिः परमहंसस्तु तुर्याख्यः श्रुतिचोदितः ।
यमैश्च नियमैर्युक्तो विष्णुरूपी त्रिदण्डभृत् ।।' इति ।

एवं सति मौनादीनां वागादिदमनहेतुत्वाद्यथा दण्डत्वं तथैवाज्ञानतत्कार्यदमनहेतोर्ज्ञानस्य दण्डत्वम् । अयं ज्ञानदण्डो येन परमहंसेन धृतः स एव मुख्य एकदण्डीत्युच्यते । मानसस्य ज्ञानदण्डस्य कदाचिच्चित्तविक्षेपेण विस्मृतिः प्रसज्येतेति तन्निवारणार्थं स्मारकः काष्ठदण्डो ध्रियते । तदेतच्छास्त्रार्थरहस्यमबुद्ध्वा वेषमात्रेण पुरुषार्थसिद्धिमभिप्रेत्य काष्ठदण्डो येन परमहंसेन धृतः स पुरुषो बहुविधयातनोपेतत्वाद् घोरान्महारौरवसंज्ञकान्नरकानाप्नोति । तत्र हेतुरुच्यते—परमहंसवेषं दृष्ट्वा ज्ञानित्वभ्रान्त्या सर्वे जनाः स्वस्वगृहे तं भोजयन्ति । अयं च जिह्वालम्पटो वर्ज्यावर्ज्यविवेकमकृत्वा सर्वमन्नमश्नाति । तेन प्रत्यवायं प्राप्नोति । यानि तु 'नान्नदोषेण मस्करी' 'चातुर्वर्ण्यं चरेद् भैक्षम्' इत्यादिस्मृतिवचनानि तानि ज्ञानिविषयाणि । अयं च ज्ञानवर्जित इति युक्तोऽस्य नरकः । अत एव ज्ञानहीनस्य यतेर्भिक्षानियममाह मनुः—

'न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया ।
नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित् ।।
एककालं चरेद् भैक्षं न प्रसज्येत विस्तरे ।
भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जति ।।'
(मनु. ६. ५०, ५५) इति ।

ज्ञानाभ्यासिनं प्रति त्वेवं स्मर्यते—

'एकवारं द्विवारं वा भुञ्जीत परहंसकः ।
येन केन प्रकारेण ज्ञानाभ्यासी भवेत् सदा ।।' इति ।

एवं च सति ज्ञानदण्डकाष्ठदण्डयोर्यदन्तरमुत्तमत्वाधमत्वरूपं तदिदमवगत्योत्तमं ज्ञानदण्डं यो धारयति स एव मुख्यः परमहंस इत्यभ्युपगन्तव्यम् ।

नन्वस्त्वभिज्ञस्य परमहंसस्य ज्ञानदण्डो माभूत् काष्ठ-दण्डनिर्बन्धः, इतरा तु चर्या सर्वा कीदृशीत्याशङ्क्याह–

**'आशाम्बरो न नमस्कारो न स्वधाकारो न निन्दा न स्तुतिर्यादृच्छिको भवेद् भिक्षुर्नावाहनं न विसर्जनं न मन्त्रं न ध्यानं नोपासनं न लक्ष्यं नालक्ष्यं न पृथङ नापृथङ न चाहं न त्वं न च सर्वं न चानिकेतस्थितिरेव स भिक्षुः सौवर्णादीन्नैव परिग्रहेन्न लोकं नावलोकं च'** (परम. उ. ४.) इति ।

आशा दिशः, ता एवाम्बरं वस्त्रमाच्छादनं यस्यासावा-शाम्बरः । यत्तु स्मृतिवचनम्–

'जान्वोरूर्ध्वमधो नाभेः परिधायैकमम्बरम् ।
द्वितीयमुत्तरं वासः परिधाय गृहानटेत् ।।'

इति, तदिदमयोगिविषयम् । अत एव पूर्वम् 'तच्च न मुख्यो-ऽस्ति' इत्युक्तम् । यद्यपि स्मृत्यन्तरम्–

'यो भवेत् पूर्वसंन्यासी तुल्यो वै धर्मतो यदि ।
तस्मै प्रणामः कर्तव्यो नेतराय कदाचन ।।'

इति, तथापि तस्यायोगिविषयत्वान्नास्य नमस्कारः कर्तव्योऽस्ति । अत एव ब्राह्मणलक्षणे 'निर्नमस्कारमस्तुतिम्' (पृ. २९) इत्युदाहृतम् । गयाप्रयागादितीर्थेषु श्रद्धाजाड्यात्प्राप्तः स्वधाकारो

निषिध्यते। पूर्वत्र 'निन्दागर्व-' इत्यादिवाक्येन परकृतया स्वनिन्दया क्लेशो निवारितः, अत्र तु स्वकर्तृके अन्यविषये निन्दास्तुती निषिध्येते। यादृच्छिकत्वं निर्बन्धराहित्यम्। न क्वचिदपि व्यवहारे निर्बन्धं कुर्यात्। यस्तु देवपूजायां निर्बन्धः स्मर्यते–

'भिक्षाटनं जपः शौचं स्नानं ध्यानं सुरार्चनम्।
कर्तव्यानि षडेतानि सर्वथा नृपदण्डवत्॥'

इति, तस्याप्ययोगिविषयत्वमभिप्रेत्य नावाहनमित्याद्याम्नातम्। सकृत्स्मरणं ध्यानम्, नैरन्तर्येणानुस्मरणमुपासनमिति तयोर्भेदः। यथा योगिनः स्तुतिनिन्दादिलौकिकव्यवहाराभावः, यथा वा देवपूजादिधर्मशास्त्रव्यवहाराभावः, तथा लक्ष्यत्वालक्ष्यत्वादिज्ञानशास्त्रव्यवहारोऽपि नास्ति। 'यत्साक्षिचैतन्यमस्ति तदिदम् 'तत्त्वमसि' इति वाक्ये त्वंपदेन लक्ष्यम्; देहादिविशिष्टं चैतन्यं लक्ष्यं न भवति, किं तु वाच्यम्; तच्च वाच्यं तत्पदार्थात् पृथक्, लक्ष्यं त्वपृथक्; स्वदेहनिष्ठो वाच्योऽर्थोऽहमिति व्यवहारार्हः, परदेहनिष्ठस्त्वमिति व्यवहारार्हः; लक्ष्यं वाच्यमित्युभयविधं चैतन्योपेतम्, अन्यज्जडं जगत्सर्वमिति व्यवहारार्हम्' इत्येतादृशो विकल्पो न कोऽपि योगिनोऽस्ति, तदीयचित्तस्य ब्रह्मणि विश्रान्तत्वात्। अत एव स भिक्षुरनिकेतस्थितिरेव। यदि नियतनिवासार्थं कंचिन्मठं संपादयेत्, तदानीं तस्मिन् ममत्वे सति तदीयहानिवृद्ध्योश्चित्तं विक्षिप्येत। एतत्सर्वमभिप्रेत्य गौडपादाचार्या आहुः–

'निःस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत्॥'

(२. ३७) इति।

यथा मठो न परिग्रहीतव्यस्तथा सौवर्णराजतादीनां भिक्षाचमनादिपात्राणामेकमपि न गृह्णीयात् । तदाह यमः—

‘ हिरण्मयानि पात्राणि कार्ष्णायसमयानि च ।
यतीनां तान्यपात्राणि वर्जयेत् तानि भिक्षुकः ।। ’ इति ।

मनुरपि—

‘ अतैजसानि पात्राणि तस्य स्युर्निर्व्रणानि च ।
तेषां मृद्भिः स्मृतं शौचं चमसानामिवाध्वरे ।।
अलाबु दारुपात्रं वा मृन्मयं वैणवं तथा ।
एतानि यतिपात्राणि मनुः स्वायंभुवोऽब्रवीत् ।। ’
(६. ५३, ५४) इति ।

बोधायनोऽपि—

‘ स्वयमाहृतपर्णेषु स्वयं शीर्णेषु वा पुनः ।
भुञ्जीत न वटाश्वत्थकरञ्जानां च पर्णके ।।
आपद्यपि न कांस्येषु मलाशी कांस्यभोजनः ।
सौवर्णे राजते ताम्रे मृन्मये त्रपुसीसयोः ।। ’ इति ।

तथा लोकं जनं शिष्यवर्गं न गृह्णीयात् । तदाह मनुः—

‘ एक एव चरेन्नित्यं सिद्ध्यर्थमसहायकः ।
सिद्धिमेकस्य पश्यन् हि तज्जहाति न हीयते ।। ’
(६. ४२) इति ।

मेधातिथिरपि—

‘ आसनं पात्रलोपश्च संचयः शिष्यसंग्रहः ।
दिवास्वापो वृथालापो यतेर्बन्धकराणि षट् ।।

एकाहात् परतो ग्रामे पञ्चाहात् परतः पुरे ।
वर्षाभ्योऽन्यत्र यत्स्थानमासनं तदुदाहृतम् ।।
उक्तालाब्वादिपात्राणामेकस्यापि न संग्रहः ।
भिक्षोर्भैक्षभुजश्चापि पात्रलोपः स उच्यते ।।
गृहीतस्य तु दण्डादेर्द्वितीयस्य परिग्रहः ।
कालान्तरोपभोगार्थं संचयः परिकीर्तितः ।।
शुश्रूषालाभपूजार्थं यशोऽर्थं वा परिग्रहः ।
शिष्याणां न तु कारुण्यात् स ज्ञेयः शिष्यसंग्रहः ।।
विद्या दिनं प्रकाशत्वादविद्या रात्रिरुच्यते ।
विद्याभ्यासे प्रमादो यः स दिवास्वाप उच्यते ।।
आध्यात्मिकीं कथां मुक्त्वा भैक्षचर्यां सुरस्तुतिम् ।
अनुग्रहः पथिप्रश्नो वृथालापः स उच्यते ।। ' इति ।

लोकं शिष्यजनरूपं न गृह्णीयादित्येतावदेव न भवति, किं तु तस्य लोकस्यावलोकं दर्शनमपि न कुर्यात्, तस्य बन्धहेतुत्वात् । न चेत्यनेनान्यदपि स्मृतिनिषिद्धं न कुर्यादित्यभिप्रेतम् । तच्च निषिद्धं मेधातिथिर्दर्शयति—

' स्थावरं जङ्गमं बीजं तैजसं विषमायुधम् ।
षडेतानि न गृह्णीयाद् यतिर्मूत्रपुरीषवत् ।।
रसायनं क्रियावादं ज्योतिषं क्रयविक्रयम् ।
विविधानि च शिल्पानि वर्जयेत् परदारवत् ' । इति ।

योगिनो लौकिकवैदिकव्यवहारगतानि यानि बाधकानि सन्ति तेषां वर्जनमभिहितम् । अथ प्रश्नोत्तराभ्यामत्यन्तबाधकं प्रदर्श्य तद्वर्जनमाह—

**'आबाधकः क इति चेदाबाधकोऽस्त्येव । यस्माद् भिक्षुर्हिरण्यं रसेन दृष्टं चेत् स ब्रह्महा भवेत् । यस्माद् भिक्षुर्हिरण्यं रसेन स्पृष्टं चेत् स पौल्कसो भवेत् । यस्माद् भिक्षुर्हिरण्यं रसेन ग्राह्यं चेत् स आत्महा भवेत् । तस्माद् भिक्षुर्हिरण्यं रसेन न दृष्टं च न स्पृष्टं च न ग्राह्यं च'** (परम. उ. ४) इति ।

आकारोऽभिव्याप्त्यर्थः, 'आङीषदर्थेऽभिव्याप्तौ' इत्यभिहितत्वात् । अभिव्याप्तो बाधकोऽत्यन्तबाधकस्तस्य सद्भावं प्रतिज्ञाय हिरण्यस्य तथाविधबाधकत्वमुच्यते । रसेनाभिलाषयुक्तेनादरेण हिरण्यं यदि दृष्टं स्यात्तदानीं स द्रष्टा भिक्षुर्ब्रह्महा भवेत् । हिरण्यासक्त्या तत्संपादनरक्षणयोः सर्वदा प्रयतमानस्तद्वैयर्थ्यपरिहाराय प्रपञ्चमिथ्यात्वप्रतिपादकान् वेदान्तान् दूषयित्वा तत्सत्यत्वमवलम्बते । ततः शास्त्रसिद्धमद्वितीयं ब्रह्म तेन भिक्षुणा हतमेव भवति । तस्मादसौ ब्रह्महा भवेत् । तथा च स्मर्यते–

'ब्रह्म नास्तीति यो ब्रूयाद् द्वेष्टि ब्रह्मविदं च यः ।
अभूतब्रह्मवादी च त्रयस्ते ब्रह्मघातकाः ॥' इति ।
'ब्रह्महा स तु विज्ञेयः सर्वधर्मबहिष्कृतः ।' इति च ।

अभिलाषपूर्वकं हिरण्यं स्पृष्टं चेत् तदा तत्स्प्रष्टा भिक्षुः पतितत्वात् पौल्कसो म्लेच्छसदृशो भवेत् । पातित्यं च स्मर्यते–

'पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत् ।
धीपूर्वं रेतउत्सर्गो द्रव्यसंग्रह एव च ॥' इति ।

अभिलाषपुरःसरं हिरण्यं न ग्राह्यम् । गृहीतं चेत् तदा स भिक्षुर्देहेन्द्रियादिसाक्षिणमसङ्गं चिदात्मानं हतवान् भवेत्, असङ्गत्वम-

पोह्य स्वात्मनो हिरण्यादिद्रव्यं प्रति भोक्तृत्वेन प्रतिपन्नत्वात्। तस्याश्चान्यथाप्रतिपत्तेः सर्वपापरूपत्वं स्मर्यते–

‘ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ।। ’
(म. भा. आदि. ९८. ७.) इति ।

कि चात्मघातिनः सुखलेशेनापि रहिता बहुविधदुःखेनावृता लोकाः श्रूयन्ते–

‘ असुर्या नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ।। ’
(ईश. उ. ३) इति ।

दृष्टं चेत्यनेन चकारेण श्रुतं च समुच्चीयते । स्पृष्टं चेत्यनेन कथितस्य समुच्चयः । ग्राह्यं चेत्यनेन व्यवहृतं चेति समुच्चीयते । दर्शनस्पर्शनग्रहणवदभिलाषपूर्वका हिरण्यवृत्तान्तश्रवणतद्गुणकथनतदीयक्रयादिव्यवहारा अपि प्रत्यवायहेतव इत्यर्थः । यस्मात् साभिलाषहिरण्यदर्शनादयो दोषकारिणस्तस्माद् भिक्षुणा हिरण्यदर्शनादयो वर्जनीया इत्यर्थः ।

हिरण्यवर्जनस्य फलमाह–

**‘ सर्वे कामा मनोगता व्यावर्तन्ते दुःखे नोद्विग्नः सुखे निःस्पृहस्त्यागो रागे सर्वत्र शुभाशुभयोरनभिस्नेहो न द्वेष्टि न मोदते च सर्वेषामिन्द्रियाणां गतिरुपरमति य आत्मन्येवावतिष्ठते** ’ (परम. उ. ४) इति ।

पुत्रभार्यागृहक्षेत्रादिकामानां सर्वेषां हिरण्यमूलत्वाद्धिरण्ये परित्यक्ते सति ते कामा मनोगता मनस्यवस्थानाद्व्यावर्तन्ते व्यावृत्ता भवन्ति । कामनिवृत्तौ सत्यां कर्मप्राप्तयोर्दुःखसुखयो-रुद्वेगस्पृहे न भवतः । एतच्च स्थितप्रज्ञप्रस्तावे प्रपञ्चितम् । ऐहिकयोः सुखदुःखयोर्विक्षेपकत्वेनामुष्मिकविषयरागेऽपि त्यागो भवति । ऐहिकसुखस्पृहायुक्तो हि तद्दृष्टान्तेनानुमित आमुष्मिके सुखे रागवान् भवति । तस्मादैहिके निःस्पृहस्या-मुष्मिके रागाभावो युज्यते । एवं सति सर्वत्र लोकद्वयेऽपि यौ शुभाशुभावनुकूलप्रतिकूलविषयौ तयोरनभिस्नेहः । एतच्च द्वेषराहित्यस्याप्युपलक्षणम् । तादृशो विद्वानशुभकारिणं कंचि-दपि पुरुषं न द्वेष्टि । शुभकारिणं दृष्ट्वा न च मोदं प्राप्नोति । द्वेषमोदरहितो यः पुमानात्मन्येव सर्वदावतिष्ठते तस्य सर्वेषा-मिन्द्रियाणां गतिः प्रवृत्तिरुपरमति । इन्द्रियोपरतौ न कदा-चिदपि निर्विकल्पकसमाधेर्विघ्नो भवति । 'तेषां का स्थितिः ?' इति प्रश्नस्य संक्षेपविस्तराभ्यामुत्तरं पूर्वमुक्तम् ; तदेवात्र पुनरपि हिरण्यनिषेधप्रसङ्गेन स्पष्टीकृतम् ।

अथ विद्वत्संन्यासमुपसंहरति—

**'यत्पूर्णानन्दैकबोधस्तद् ब्रह्माहस्मीति कृतकृत्यो भवति कृतकृत्यो भवति'** (परम. उ. ४) इति ।

यद् ब्रह्म वेदान्तेषु पूर्णानन्दैकबोधः परमात्मेति निरूपितं तद्ब्रह्माहमस्मीत्येवं सर्वदानुभवन्नयं परमहंसः कृतकृत्यो भवतीति । यथा च स्मर्यते—

'ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नैवास्ति किंचित् कर्तव्यमस्ति चेन्न स तत्त्ववित् ।।'
इति ।

जीवन्मुक्तिविवेकेन तमो हार्दं निवारयन् ।
पुमर्थमखिलं देयाद् विद्यातीर्थमहेश्वरः ।। १ ।।[1]

**इति श्रीमद्विद्यारण्यप्रणीते जीवन्मुक्तिविवेके विद्वत्संन्यासनिरूपणं नाम पञ्चमं प्रकरणम् ।। ५ ।।**

---

**संपूर्णोऽयं श्रीमद्विद्यारण्यप्रणीतो जीवन्मुक्तिविवेकः ।**

---

[1] केषुचिद् ग्रन्थेषु अधिकपाठो दृश्यते—

भेदाभेदौ सपदि गलितौ पुण्यपापे विशीर्णे
मायामोहौ क्षयमधिगतौ नष्टसंदेहवृत्तिः ।
शब्दातीतं त्रिगुणरहितं प्राप्य तत्त्वावबोधं
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ? ।।
तीर्थानि तोयपूर्णानि देवान् पाषाणमृन्मयान् ।
योगिनो न प्रपद्यन्ते आत्मज्ञानपरायणाः ।।
अग्निर्देवो द्विजातीनां मुनीनां हृदि दैवतम् ।
प्रतिमास्वल्पबुद्धीनां सर्वत्र विदितात्मनाम् ।।
सर्वत्रावस्थितं शान्तं न प्रपद्ये जनार्दनम् ।
ज्ञानचक्षुर्विहीनत्वादन्धः सूर्यमिवोदितम् ।।

# JĪVANMUKTIVIVEKA
## (PATH TO LIBERATION IN LIFE)

### FIRST CHAPTER

### *AUTHORITY BEARING TESTIMONY TO JĪVANMUKTI OR LIBERATION IN LIFE*

1. I venerate Vidyātīrtha, the Supreme, whose very breath the Veda-s are and who evolved the whole cosmos from the Veda-s.

2. I describe henceforth the renunciation of the seeker (*vividiṣā-saṃnyāsa*) and the renunciation of the knower (*vidvat-saṃnyāsa*), distinguishing the one from the other. The former is the cause of 'liberation after the dissolution of the body' (*videhamukti*), and the latter is of 'liberation in life' (*jīvanmukti*).

3. The cause of renunciation is detachment; because the Śruti enjoins, 'One must renounce (the world), the very day one feels (complete) detachment.' The stages[1] and divisions of this renunciation are all matters dealt with by the Purāṇa-s (popular exposition of esoteric truths).

4-5. Detachment is of two kinds: sharp and sharper. The former leads to the renunciation appropriate to the condition of the Kuṭīcaka, which, being

[1] This is said keeping in mind the well-known four periods (*āśrama-s*) of life, according to which renunciation comes fourth and last and thus obviously comes to be postponed to old age.

ripened, develops (the Saṃnyāsin) into the Bahūdaka. Sharper detachment makes the Saṃnyāsin a Haṃsa, and this ripens into the condition of the Paramahaṃsa, the real path to direct Self-Realization.[1]

6. Dull detachment is the form of disgust generated, for the time being, for the world and its goods, occasioned by the loss of a child, wife or wealth.

7. Sharp detachment is the firm resolve of the intellect not to have a child, wife or wealth, in this life.

8. Sharper detachment is the strong disgust in the form: 'For me the whole of this world, whirling through the cycle of rebirths, shall never be.' In dull detachment no renunciation is, of course, possible.

9. In the state of sharp detachment two kinds of renunciation are possible, according as the power of locomotion subsists in full strength or not. The former pertains to the Bahūdaka and the latter to the Kuṭīcaka. Both of them are *tridaṇḍin-s*.[2]

10. In the state of the sharper kind of detachment are possible two other kinds of renunciation,

[1] Four kinds of Saṃnyāsin-s are known to the sacred books. The four enumerated here are defined and described in 9 and 10 *infra*. The Kuṭīcaka resides in a secluded hermitage, the Bahūdaka goes from one sacred place to another, the Haṃsa flies like a swan to the seventh heaven, and the Paramahaṃsa enjoys liberation in this very life.

[2] Holding three long thin bamboo-sticks knotted together, emblematic of the triple renunciation of every thing connected with body, mind and speech and being therefore constantly immersed in That, which is beyond these three.

according as it leads to *brahmaloka*,[1] or to final and absolute liberation. The former condition is that of the Haṃsa, who knows the essence of Truth in that world, the latter that of the Paramahaṃsa, who knows it in this very world.

11. The various duties and actions of these are described by us in the commentary on the *Pārāśara-smṛti*. We are here concerned only with the Paramahaṃsa.

12. The Paramahaṃsa is again, either the seeker after knowledge (*jijñāsu*), or the knower (*jñānin*). The Vājasaneyin-s ordain renunciation to such seeker, for the attainment of knowledge.[2]

13. Saṃnyāsin-s renounce (the world) desiring 'this *loka*' (sphere). An explanation of this is set forth in prose for the enlightenment of those who are not sharp-witted.[3]

## 1. Vividiṣā-saṃnyāsa: The Renunciation of the Seeker

*Loka* is of two kinds: the *ātma-loka*, the world of the Self and the *anātma-loka*, the world of the non-Self. The first is described, in its triple nature, in the

[1] One of the seven *loka-s*: *bhūr-*, *bhuvar-*, *suvar-*, *mahar-*, *jana-*, *tapas-*, and *satya-* or *brahma-loka*.

[2] This is with reference to the first division of Paramahaṃsa-s, for the question is likely to suggest itself, why a seeker should renounce.

[3] In verse 13 the first half is an adaptation of the Upaniṣadic text (*Bṛ. Up.*, 4. 4. 22).

third chapter of the *Bṛhadāraṇyaka-upaniṣad*: 'Here then are indeed the three worlds—the world of men, the world of the manes and the world of the gods; the world of men can be won by begetting a son and by no other act; that of the manes, by religious rites; and that of the gods, by Gnosis' (1. 5. 16). The *ātma-loka* is also mentioned there: 'Whosoever passes away from here, without knowing his own world—the *ātma-loka*, him such world, being unknown, does not protect' (1. 4. 15); and 'He should devote himself to the world which is only the *ātman*; his acts never fail him, who so devotes himself' (1. 4. 15). In other words, whosoever, bound up in this material body of flesh and blood, passes out of it, without knowing his own proper world—the Paramātman, i.e. without realizing his identity with the supreme Self ('I am Brahman'), is deprived of the benefit of that world; that is to say, that world, the Paramātman, does not ever free him from sorrow, delusion and other evils, as the knowledge of that world is held back from him by the intervening veil of *avidyā* (ignorance). Again the acts of one devoted to such world (of the *ātman*) never fail him and (unlike ordinary acts of devotion, which bring about this or that particular result), lead him to that Self-Realization, which is the sum of all that can be desired. Also in the sixth chapter of the same: 'Why should we study? For what object should we worship?[1] Of what avail is offspring to us, to whom

[1] The first two sentences are not found in the *Bṛhadārṇyaka*.

this world, this *ātman*, is the supreme place?' (4. 4. 22) Desire for offspring leads to the crematory; non-desire for such things leads to immortality.[1]

Hence it appears that the words, 'this *loka*' (in verse 13) refer clearly to the *ātma-loka* in quest of which Saṃnyāsin-s renounce; for the word 'such' refers to 'the *ātman*' occurring as it does in a section dealing with the *ātman*, opening with the words: 'This *ātman* is unconditioned and unborn' (4. 4. 22). That which is seen, realized, is *loka*; the *ātman*. The text in question (which is a quotation from the Śruti plainly implies that Saṃnyāsin-s renounce the world for the purpose of Self-Realization (*ātmānubhava*). The Smṛti too bears this out:

'The one styled a Paramahaṃsa should, for the attainment of *brahmajñāna*, have in him all the requisite means, namely peace of mind, control of body, and the like.'

As this *saṃnyāsa* comes about by the strong desire for knowledge generated in the proper manner, in consequence of the study, etc.[2] of the Veda, either in this or in some previous incarnation, it is called the renunciation of the seeker (*vividiṣā-saṃnyāsa*). This, which is the cause of knowledge, is again of two kinds: (1) the renunciation of desire-impelled acts and others of the kind, which lead to rebirth and (2) the going, by the renouncer, into the order, by assuming all its emblems,

[1] Cf. *Āpastamba-dharmasūtra*, Praśna 2, Khaṇḍa 22.

[2] In 'etc.' are included the performance of religious duties, certain austerities and the like, enjoined by the Veda.

such as the *daṇḍa*, etc. after having been initiated into it, with the *praiṣoccāraṇa*,[1] which 'ensures to the mother and the wife of the renouncer, rebirth in the form of a male and to the renouncer, the realization of Brahman, an austere life and the knowledge of the Self in consequence.'

Renunciation is mentioned in the *Taittirīya* and other Upaniṣad-s: 'Some have attained immortality, not by acts, nor by offspring, nor by wealth, but by renunciation alone' (*Kaivalya Up.*, 3). Females also are entitled to this kind of renunciation. The *Caturdharīṭīkā* of the *Mokṣadharma*, by using the word *bhikṣukī* (female mendicant) with reference to the lady in question, when dealing with the controversy between Sulabhā and Janaka, indicates that females may renounce before marriage, or after the death of their husbands and may go about as religious mendicants, may learn and hear the *śāstra-s* dealing with *mokṣa* (namely the Upaniṣad-s and cognate literature), may meditate upon the *ātman* in seclusion and assume the emblems of *tri-daṇḍa*, etc. In the wake of the argument in the *Devatādhikaraṇa* (the section about *devatā*) in the fourth chapter of the third book of the *Śārīrakabhāṣya*, wherein a discussion has been started relating to the rights of a widower (to such renunciation), the name of lady Vācaknavī has also been mentioned. These references

[1] That is, saying the *praiṣa*, which is a formula, meaning, 'I renounce the *bhūrloka*, the *bhuvarloka* and the *suvarloka*.' In these words the renouncer declares himself free from all desires and all conditions belonging to this world or the next.

go to strengthen the right claimed by Maitreyī, the wife of Yājñavalkya, of whom she inquires in the words: 'Of what use would such (wealth) be to me, if the possession of such would not render me immortal? Tell me, whatever your worship knows, as to what I should do, in order to be free from mortality' (*Bṛ. Up.*, 4. 5. 4). Even in the case of *brahmacārin-s*, *gṛhastha-s*, and *vānaprastha-s* (students, householders and residents in hermitages), who are unable, for some cause or other, to go into *saṃnyāsa*, there is nothing in the way of *mental* renunciation for the purpose of attaining knowledge, even while performing the duties peculiar to their respective spheres of life. Many instances of such knowers of Truth occur in the Śruti-s, Smṛti-s, Purāṇa-s and Itihāsa-s, as also in the world. The condition of the Paramahaṃsa, characterized by the *daṇḍa*, etc. taken on for obtaining knowledge, has been variously described by former teachers and I do not think I have anything to add to what has been said by them in respect to it. So far about the renunciation of the seeker.

## 2. Vidvat-saṃnyāsa: The Renunciation of the Knower

Henceforth we deal with the renunciation of the knower (*vidvat-saṃnyāsa*). Renunciation by those who have realized the supreme Truth, by properly carrying out study, reflection and assimilation (*śravaṇa*, *manana* and *nididhyāsana*), is called the renunciation of the

knower. This was attained by Yājñavalkya. The worshipful Yājñavalkya, the crest-jewel of the learned, having discomfited in debate Āśvalāyana and other *vipra-s*, by variously demonstrating the Truth and having awakened Janaka, in a variety of ways, by disquisitions long and short, to the condition of supreme detachment (*vītarāgatva*), set himself to enlighten Maitreyī, his wife, into the Truth and put to her *saṃnyāsa*, as the thing he had immediately in view for himself. Having thus enlightened her, he became a Saṃnyāsin. All this is mentioned in the beginning of the *Maitreyī-brāhmaṇa*: 'Yājñavalkya, about to enter upon another stage of life (superior to that of a householder), accosted her thus: 'O beloved Maitreyī, I am about to retire from this stage' (4. 5. 2) and also at the end: . . . 'for verily this retirement leads to real immortality. Saying so he renounced' (4. 5. 15). In *Kaholabrāhmaṇa* itself, we find this *saṃnyāsa* mentioned thus: 'Having realized that *ātman* aforesaid, Brāhmaṇa-s renounce all desire for offspring, wealth and the world (*putraiṣaṇā*, *vittaiṣaṇā* and *lokaiṣaṇā*) and go about as mendicants' (*Bṛ. Up.*, 3. 5. 1).

It should not be supposed that this text applies to *vividiṣā-saṃnyāsa*, for, the word *viditvā* (having realized), implying the priority of such realization to *saṃnyāsa*, and the word *brāhmaṇa*, meaning the knower of Brahman, stand in the way of such assumption. Nor should it be supposed that the word *brāhmaṇa* refers here to the class so called; for the word *brāhmaṇa* is used with reference to that realization of Brahman.

mentioned in the sequel of the text under discussion, which is brought about by study, reflection and meditation and described there as learning, childhood and silence. If it be said that the word *brāhmaṇa* here refers to the seeker yet devoted to learning, etc. and that this construction is supported by the text, 'The Brāhmaṇa, having passed the stage of learning, must thence maintain himself in that of childhood' (3. 5. 1), we say that this cannot be, for, the word *brāhmaṇa* is used with reference to the future condition of the seeker; otherwise, the use of the particle *atha* in the text *atha brāhmaṇaḥ* (3. 5. 1)—'thence the Brāhmaṇa'—implying the previous fulfilment of all the necessary means (of Self-Realization), would be entirely out of place.

The two kinds of renunciation, *vidvat-* and *vividiṣā-saṃnyāsa-s*, are clearly mentioned also in the *Śārīra-brāhmaṇa*: 'Knowing It (the supreme Self), they melt in silence; desirous of "that sphere" (*ātma-loka*), they enter *saṃnyāsa*' (4. 4. 22). The 'melting in silence' refers to the habit of contemplation and reflection and this is possible, only when there is nothing to distract the mind from it; whence, nothing but *saṃnyāsa* is plainly implied in these words. This has also been rendered clear in the remaining clause (of the said text) thus: 'This is the reason why knowers of yore have not wished for progeny, having as their plea—"Of what avail is progeny to us to whom this world, this *ātman*, is the supreme place?"—they renounce all desire for offspring, wealth and world and betake themselves to alms' (4. 4. 22). The words 'this

world' 'this *ātman*' imply that the said world has been directly realized.

It may, however, be urged that 'melting in silence' is merely put forth in the above text, as an inducement for entering on *vividiṣā-saṃnyāsa* (the renunciation of the seeker) and the supplementary clause just examined clarifies the position still further; hence no other kind of renunciation ought to be read into the text. To this we demur on the ground that the end of the 'renunciation of the seeker' is 'knowledge,' and 'knowledge' and 'silence' are certainly not identical terms; for, they stand to each other as antecedent and consequent, as is evident from the text: 'After knowing, one becomes silent (*muni*).' Still, it may be contended that, as 'silence' is only the ultimate form assumed by matured 'knowledge,' it is but the highest condition of knowledge and, as such, the result of the renunciation of the first kind, through knowledge. Quite so. That is exactly the reason why we differentiate this kind (*vidvat-*) of renunciation, which is the end to be attained, from the other kind (*vividiṣā-saṃnyāsa*), which is but the means. As the seeker[1] should practise study, etc. for attaining realization of the Truth (*tattva*), so also the enlightened must attain 'dissolution of the mind' (*manonāśa*) and 'obliteration of

[1] This word is used throughout to indicate the seeker who has gone into *saṃnyāsa* of the first kind, namely the renunciation of the seeker (*vividiṣā-saṃnyāsa*). So also the word 'the knower' will be used in the sense of one who has gone into the second kind, the renunciation of the knower (*vidvat-saṃnyāsa*).

latent desire' (*vāsanākṣaya*), which two will be described further on.

Though these two *saṃnyāsa-s* are capable of such differentiation, yet they are looked upon as one, under the category of *paramahaṃsatva* and the Smṛtis-s have consequently spoken of 'four kinds of mendicants'. That the two renunciations in question are included in the one word *paramahaṃsatva* is explained in the *Jābāla-śruti*. There, Yājñavalkya, on being questioned by Janaka about the nature of *saṃnyāsa*, explains the renunciation of the seeker along with what would follow it, by presenting a scheme of the stages of development (of the intellect of the seeker) and meets the objection of Atri, that one without the sacred thread cannot be called a Brāhmaṇa, by saying that *ātmajñāna* (Self-knowledge) alone is the real sacred thread. Hence it may be safely concluded that the seeker is included in the denomination Paramahaṃsa, as he should not wear the sacred thread.[1] So also, in another section (Kaṇḍikā) of the same, in a passage dealing with *vidvat-saṃnyāsin-s*, which opens with the words, 'the Paramahaṃsa is one, etc.,' are mentioned the names of many *jīvanmukta-s*, like Saṃvartaka and others, and they are described as 'bearing no marks, bound to no forms, and behaving like mad men, though not mad.' Further, the procedure to be adopted by the

[1] The sacred thread is worn by a Brāhmaṇa, as a mark of initiation into the particular order of the Veda to which his father belongs, which he renounces, when he enters into *saṃnyāsa* seeking to realize the All.

*tri-daṇḍin*, for entering on the *vividiṣā-saṃnyāsa* with *eka-daṇḍa*, is prescribed therein thus: 'That he should throw off in water, after reciting the words, "*bhūḥ svāhā*" (be this offered to the *bhūr-loka*), the three *daṇḍa-s*, the water pot, the bag for holding alms, the cup, the filter-cloth, the tuft of hair on the head, the sacred thread and all, and then seek his own Self (*Jābā. Up.*, 6. 1-2).' Then *vidvat-saṃnyāsa*, which is the end and aim to be sought thereafter, is thus described—'He is verily the Paramahaṃsa, who resumes the condition he was in, at the moment of birth; frees himself from the pairs of opposites; neither receives nor possesses anything; ever walks in the exalted way of Brahman, with mind ever pure; goes about begging at large at the prescribed time, using his belly alone as his begging bowl; remaining indifferent to gain or loss, abides in any place, be it a deserted dwelling, temple, hay-rick, anthill, root of a tree, potter's workroom, the house where the sacred fires are kept, the sand bank of a river, mountain-cave or cleft, the hollow of a tree, rivulet or bare ground; avoids all exertion; is selfless; is ever absorbed in divine contemplation; abides in the Ātman, ever bent on up-rooting all actions, good, bad or indifferent; and shuffles off his mortal coil with the true spirit of renunciation (*Jābā. Up.*, 6. 3).' From this it is established that these two types (of Saṃnyāsin-s) are included in the order of Paramahaṃsa-s.

Though both kinds of *saṃnyāsa* are included in the order of the Paramahaṃsa, degrees of difference

must be admitted, inasmuch as the two renunciations we are considering have peculiarities of their own, running counter to the real nature of each other. This contradistinction of the two, will be clearly brought out by a reference to the *Āruṇi-* and *Paramahaṃsa-upaniṣad-s*. In the words: 'O Lord! how can I completely abandon actions?' the pupil Āruṇi plainly asks his teacher about the renunciation of the seeker which consists in the complete abandonment of the tuft of hair on the head, the sacred thread, the study of the Veda, repetition of the *Gāyatrī* and other actions of the kind. Accordingly the teacher, Prajāpati, after enjoining complete renunciation (of everything) implied by the words 'the tuft of hair, sacred thread, etc. lays down the acceptance of the bamboo-stick, a blanket, and a loin-cloth' and continues: 'He should wash himself at each of the three *saṃdhyā-s*[1], be centred in the Self at the moment of concentration, and should constantly study that part of the Veda-s known as the Āraṇyaka-s, namely the Upaniṣad-s' (*Āruṇ. Up.*, 2). Thus are described the duties peculiar to that particular period of life which lead to real knowledge. Again, Nārada, having

[1] Literally the point where any two periods meet. The morning and evening are two such well known periods between day and night. But three *saṃdhyā-s* are here spoken of, which leads us to the inner meaning of the word. The period between the change of breath from Sun to Moon (right to left) and *vice versa*, known as the Suṣumnā is called *saṃdhyā*, and this, in the case of a practised ascetic, occurs only thrice in a day. The explanation that follows bears this out.

initiated a question about the renunciation of the knower in the words, 'What is the path of those Yogin-s who are Paramahaṃsa-s?' the teacher, Lord Prajāpati, as before, hinted first at the renunciation of everything implied in the words 'sons, friends and all', and later referred to the 'bamboo-stick, the cloak and the loin-cloth', as the only things that could be retained, with a view to protecting the body and obliging the world. Even the taking of the stick is spoken of as a mere convention, for, says he, 'it is not the chief (condition), and therefore not part of the (necessary) injunctions of the sacred texts'. If it be asked, 'What is then the essential'? he adds, 'not certainly the stick, nor the (disposing of the) tuft of hair, nor (of the) sacred thread, nor (the betaking to a mere) loin-cloth, by the Paramahaṃsa, is the real essence (of all that is here said).' Thus, it is pointed out that the absence of the stick, etc. the insignia of this Order, is in accord with the spirit of the holy writ; and, further, the words, 'Neither cold nor heat (affects him)'; 'He is clad in the ample folds of that cloth, which is made up of space extending itself in the ten directions; he is beyond the convention of saluting,' show clearly that he is beyond the usages and forms of the world. By way of winding up, Prajāpati describes this condition as leading only to the realization of Brahman, when he says at the end of this discussion: 'He (the Paramahaṃsa) has all his desires supremely satisfied, on his finally realizing in himself that Brahman which is all Bliss and Light, ever full and thus experiencing the full force and meaning

of the text 'I am Brahman' (*Paramahaṃsa Up.*, 4). From all this, it is clear that these two (kinds of renunciation) are apart from each other, as their characteristics are distinctly opposed to one another. This distinction is emphasized in the Smṛti also.

About the renunciation of the seeker it is said:

'Thus finding the world entirely worthless, seekers after the Truth renounce the world even before marriage,[1] feeling the supremest sense of detachment within themselves (*Bṛ. Smṛ.*, p. 305). *Yoga* i.e. Karmayoga—(the Path of Action) is all action; Gnosis is all renunciation; therefore the wise, setting Gnosis above everything, should renounce the world.'

Further on it is said about the renunciation of the knower:

'When in the eternal, supreme Brahman, the real essence is realized, then taking only one *daṇḍa*, the ascetic must give up the sacred thread and the tuft of hair (on the head); he should renounce everything and enter upon the Order, having well realized the supreme Brahman.'

But 'Desire for Knowledge' may arise out of sheer curiosity, as in the case of one desirous of acquiring an art or learning a science. So also 'learning' may be found in those whose knowledge may, in spite

[1] With marriage begins the second stage of life called *gṛhasthāśrama*. Generally, it is believed that *saṃnyāsa*, the fourth stage, cannot be entered upon without passing through the preliminary stages. The verse quoted puts it that the sense of detachment being firm, *saṃnyāsa* may be entered upon, even before marriage, or, indeed, at any time.

of vaunted scholarship, be, after all, superficial; yet, neither the one, nor the other, is seen to renounce (the world). The question therefore naturally suggests itself —What is the full import of the 'desire for knowledge' and 'learning' itself? The reply is as follows: 'As, when hunger is gnawing with all its might, no action other than eating commends itself to the mind, and even a moment's delay becomes annoyingly intolerable, so, when disgust becomes settled towards actions which invariably lead to birth and death, and an eager longing is generated for the acquisition of learning through study, etc. the kind of *saṃnyāsa* which suggests itself is *vividiṣā*.' The limit of 'learning' is thus defined in the *Upadeśa-sāhasrī*:

'He is liberated even without his wish, who has vivid Self-knowledge eclipsing altogether his body-consciousness' (4. 5).

So also the Śruti:

'The knot of the heart is pierced, all doubts are cut asunder, all *karman* fades away, on the realization of the Supreme' (*Muṇ. Up.*, 2. 8).

The highest condition attainable is that of the *hiraṇya-garbha*, but even this pales into insignificance, in relation to the Supreme spoken of in the text just quoted. The 'knot of the heart' refers to the mistaken identity of the ever present Witness (the Ātman) with the intellect, brought about by beginningless ignorance; this is so-called because of its being fast as a knot. The 'doubts' referred to in the text are as follow: 'Is

